आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २०

श्रीमद्विद्यारण्यकृतो

# जीवन्मुक्तिविवेकः ।

एतत्पुस्तकम्

वेदशास्त्रसंपन्नैः पणशीकरोपाह्ववासुदेवशास्त्रिभिः

संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८२२

खिस्ताब्दाः १९०१



मूल्यमाणकत्रयाधिक एको रूपकः ( १८३ ) ।

# जीवन्मुक्तिविवेकस्य भूमिका ।

जीवन्मुक्तिविवेकेन बन्धं हार्दं निवारयन् ।
पुमर्थमखिलं देयाद्विद्यातीर्थमहेश्वरः ॥

इह खलु संसारे मुक्ता मुमुक्षवो विषयिणः पामराश्चेति चतुर्विधा जना उपलभ्यन्ते । मुक्तानां प्राप्तव्य[स्य]प्राप्तत्वान्न काऽपीतिकर्तव्यता, तदनुकूल उद्यमश्चोपयुज्यते । पामरा विषयिणश्च ज्ञानहीनत्वादनधिकारिण एव । परिशेषादज्ञानतमोनिवर्तकेऽस्मिन्वेदान्तशास्त्रे मुमुक्षव एवाधिक्रियन्ते । मुमुक्षुलक्षणं चान्यत्र द्रष्टव्यम् । तादृशानां मुमुक्षूणां ज्ञानप्राप्तिपूर्वकमात्मविज्ञानेन पाञ्चभौतिकशरीरपातानन्तरं मुक्तिः स्यादेव । परंच *ज्ञातव्यस्याऽऽत्मनः प्राप्तिसमकालमेव प्रतिबन्धकस्याज्ञानस्य निवृत्त्या मुक्तिसुखं लभ्यतामिति विचार्य परमकारुणिकैः पूर्वाचार्यैः शरीरधारणेऽपि सति तत्त्वज्ञानानन्तरं "ज्ञानादेव तु कैवल्यम्" इति श्रुतेर्ज्ञानप्राप्तिक्षण एव मुक्तिरुक्ता, सैव जीवन्मुक्तिरित्युच्यते । सा च विभिन्नासूपनिषत्सु श्रीमद्भगवद्गीतासु च तेषु तेषु स्थलेषु संक्षेपतो विस्तरतश्च प्रतिपादिता । तदुपयोगितया संन्यासाश्रमोऽपि पराशरमाधवीयादिषु विस्तरेण प्रपञ्चितः । तथाऽपि तेषां ग्रन्थानां बहुत्वाद्दुरूहत्वाच्चाल्पायासेनैव मुमुक्षूणां जीवन्मुक्तिस्वरूपज्ञानं भूयादिति विचार्य परमकृपालवो वीरबुक्कभूपालसाम्राज्यधुरंधराः श्रीमत्सायणमाधवाचार्या एव स्वयं चतुर्थाश्रमस्वीकरणोत्तरं पूर्वप्रणीतैरपि ज्योतिर्वैद्यधर्मशास्त्रव्याकरणमीमांसावेदान्तग्रन्थैरपरितुष्टान्तःकरणाः स्वकृतेभ्यस्तेभ्यस्तेभ्यो ग्रन्थेभ्यः सारमाकलय्य, तथा केवलमर्थतःपठितनिगमशिरोभागभूतायाः श्रीमद्भगवद्गीतायाः, तथा एवंगुणगणविशिष्टाच्छ्रीराममनुलक्ष्य वसिष्ठप्रचोदिताद्योगवासिष्ठात्, तथा श्रीमच्छुकादिपरमहंसास्वादितान्निगमकल्पतरुफलभूताच्छ्रीमद्भागवताच्च स्वप्रतिपिपादयिषितविषयसाधनीभूतानि प्रमाणवचनान्युद्धृत्य च तमिममन्वर्थनामानं संन्यासविषयविभागदर्शकं जीवन्मुक्तेर्विलक्षणसुखाविर्भावविलसद्गर्भितं मोक्षनिश्रेणीभूतं जीवन्मुक्तिविवेकाख्यं ग्रन्थं समचीक्लृपन् ॥

---

* ज्ञातव्यं च—"किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्" इति ।

अपि च—"एतज्ज्ञेयं नित्यमेवाऽऽत्मसंस्थं नातः परं वेदितव्यं हि किंचित् । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्" इति । (कृष्णयजुः श्वे० अ० १)

सन्ति चास्मिन्क्लृप्तनामसदृक्फलानि जीवन्मुक्तिप्रमाणप्रकरणम् (१), वासनाक्षयप्रकरणम् (२), मनोनाशप्रकरणम् (३), स्वरूपसाधन (सिद्धिप्रयोजन)-प्रकरणम् (४), विद्वत्संन्यासनिरूपणप्रकरणम् (५), इति चाव्यभिचारेण धृतनामसदृक्षविषयप्रतिपादकानि पञ्च प्रकरणानि ।

संप्रति ह्येतद्ग्रन्थप्रणेतॄणामखिलविद्यानिकरपारदृश्वनां ग्रन्थनिर्मात्रग्रेसराणां श्रीमद्विद्यारण्यस्वामिनां जन्मप्रादुर्भावः १३०० त्रयोदशशततमे शालिवाहनशाकेऽभूदिति कैश्चिच्चोपलब्धताम्रपट्टानुसारेण १३१३ त्रयोदशाधिकत्रयोदशशततमे शाकेऽभवदिति त्रयोदशवर्षान्तरेणाऽऽकलितः । तथा च ये ग्रन्थकर्तृशिरोमणयः सायणमाधवाचार्या इति विस्मृतप्रथाः पूर्वाश्रमे त एवानन्तरं विद्यारण्येत्यभिधया चतुर्थाश्रमे विराजमाना बभूवुरिति प्रसिद्धिः । कैश्चिच्च तेभ्यः पृथगेवेमे, इति निर्मूलोऽपि तर्कः समुद्भावितः, तत्प्रामाण्ये मतभेदेन विवदमानत्वादास्तामेतद्विषयस्य राद्धान्तविचारणाशुष्कप्रयासेन, असारेण तद्विवेचनेन च ।

उत्तराश्रमस्वीकरणोत्तरं कदाचित्काशीक्षेत्रे श्रीमद्वेदव्यासान्प्रसाद्य स्वसंकलितानि श्रुतिभाष्याणि शुद्धाशुद्धविवेचनाय तान्प्रत्यददुः । तैरपि पाङ्क्तालोचनेन सर्वथैवैषां भाष्याणां निर्दोषत्वमालोच्य सादरमेषां श्रीविद्यारण्य इत्यभिधा प्रतिष्ठापिता वर्वर्ति लोकेषु इतीयमाख्यायिका । तदुत्तरं च स्वस्य जागरूके जीवन्मुक्तत्वेऽपि वर्ष्मभाक्क्रमप्राप्तां जारठीमवस्थामाकलय्य तदानीं पर्यटनासामर्थ्यान्निजगुर्वनुज्ञया श्रीमच्छंकराचार्यस्थापितदक्षिणदिग्गतशृङ्गेरीमठाधिपत्यमुररीकृत्य श्रीजगद्गुरुशंकरावतारपरिशिष्टमनेकमतखण्डनपूर्वकमव्याहतं श्रुतिमार्गप्रचयं [वि]तस्तरुः । तदलममितगुणानामेषां गुणप्रपञ्चनेन । विशेषस्तु(षं तु) विद्वद्वराः इस्लाम्पुरकरोपाह्ववामनशास्त्रिण आनन्दाश्रममुद्रितरुद्रभाष्यप्रस्तावनायां यथावत्समयूयुजन्स तत एवावगन्तव्यः ॥

अस्य शोधनसमये संकलितानां षण्णामादर्शपुस्तकानां क्रमः । तेषु च चत्वारि पुण्यपत्तनस्थानन्दाश्रमाधिपातिभिः आपटे इत्युपाह्वैर्महादेव चिमणाजी इत्येतैर्दत्तानि । तत्क्रमश्चेत्थम्—

( क. ) इति संज्ञितम्—रा. रा. रघुनाथराव नगरकर इत्येतैः पुण्यपत्तननिवासिभिर्दत्तम् । तल्लेखनकालशाकः १७०४ शुभकृन्नामाब्दः ।

( ख. ) इति संज्ञितम्—वे. शा. वामनबुवा मठाधिकारी इत्येतेषां चोपडेसंस्थानवासिनाम् ।

(ग.) इति संज्ञितम्—रा. रा. मोरोबादादाफडणीस इत्येतैः पुण्यपत्तनवासिभिर्दत्तम्। तच्छकादि १६९१ विरोध्यब्दे पौष शु० ३ इति।

(घ.) इति संज्ञितम्—रा. रा. किबेसाहेब इत्येतैर्दत्तम्। तत्कालः संवत् १८२८

(ङ.) इति संज्ञितम्—रा. रा ज्येष्ठारामम्मुकुन्दजी इत्येतेषां मुम्बापुरवासिनां काश्यां मुद्रितम्। तत्कालः संवत् १९३७ इति।

(च.) इति संज्ञितम्—वे. शा. वामनशास्त्रि इस्लाम्पुरकर इत्येतैः प्रथमप्रकरणहीनमप्यतीव शुद्धतरमेकं दत्तम्। तत्कालशाकः १७९५।

तदेतेषां पुस्तकानामाकलनेन यथाधिषणं मया यथावत्संशोधितोऽयं ग्रन्थस्तथाऽप्यस्य शोधनावसरेऽनवधानतो दृग्दोषाच्च क्वचन मुद्रणकर्मनियुक्तानां दौर्लक्ष्येण च यदत्र स्खलितानि तथाऽपि—

दोषदुष्टमिदमित्यवज्ञया हातुमिच्छत न जातु साधवः।
शैवलं किल विहाय केवलं निर्मलं किमु न पीयते जलम्॥

इतिसाधुक्षुण्णपदव्यवलम्बिनो निसर्गदयालवः परिश्रमविदः कोविदा मानुषशेमुषीसुलभानि स्खलितानि दयार्द्रदृष्ट्या तत्र तत्र परिशोधनेन क्षमापयन्त्विति साञ्जलिबन्धं सविनयमभ्यर्थयते।

पणशीकरोपाह्वो

वासुदेवशास्त्रिशर्मा

एतद्ग्रन्थस्य प्रथममुद्रणावृत्तिसमये शोधनकर्त्रादीनां प्रमादाद्यानि स्खलितान्यभवंस्तानि प्रस्तुतद्वितीयमुद्रणावृत्तिसमये पूर्वं संशोधितस्याप्यस्य ग्रन्थस्य पुनः सूक्ष्मया दृष्ट्याऽऽनन्दाश्रमस्थपण्डितैः संशोधनं कारयित्वा प्रायोऽपाकृतानि। अयं च प्रयासः कियान्सफल इत्येतद्ग्रन्थवाचकैरेव प्रत्यक्षीकरणीयमिति सविनयं प्रार्थयते—

आनन्दाश्रमसंस्थाव्यवस्थापकः

हरि नारायण आपटे.

---

॥ श्रीः ॥

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमद्विद्यारण्यमुनिविरचितः

# जीवन्मुक्तिविवेकः ।

## तत्र प्रथमं जीवन्मुक्तिप्रमाणप्रकरणम् ।

यस्य निः[1]श्वसितं वेदा[2] यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः ।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥ २ ॥
संन्यासहेतु[3]र्वैराग्यं यदहर्विरजेत्तदा ।
प्रव्रजेदिति वेदो[4]क्तेस्तद्भेदस्तु पु[5]राणगः ॥ ३ ॥
विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ।
सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥ ४ ॥
श[6]क्तो बहूदके तीव्रतरायां हंससंज्ञिते ।
मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने ॥ ५ ॥
पुत्रदारगृहादीनां नाशे तात्कालिकी मतिः ।
धिक्संसार[7] इतीदृक्स्याद्विरक्तेर्मन्दता हि सा ॥ ६ ॥
अस्मिञ्जन्मनि मा भूवन्पुत्रदारादयो मम ।
इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता ॥ ७ ॥
पुनरावृत्तिसहितो लोको मे माऽस्तु कश्चन ।
इति तीव्रतरत्वं स्यान्मन्दे न्यासो [8]न कोऽपि हि ॥ ८ ॥
यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् ।
कुटीचको बहूदश्चेत्युभावेतौ त्रिदण्डिनौ ॥ ९ ॥
द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः ।
तल्लोके तत्त्ववि[10]द्धंसो लोकेऽस्मिन्परहंसकः ॥ १० ॥

---

१ ग. घ. निश्वसितं । २ घ. °दा मायया योऽखि° । ३ ग. °हेतु वै° । ४ ग. °क्ते तद्भे° । ५ घ. पुराणतः । ६ ग. शक्तौ । ७ क. ख. ग. घ. °रमिती° । ८ घ. न कश्चन । ९ ङ. हि । यत्रा° । १० ङ. °द्धंसलो° ।

एतेषां[1] तु समाचाराः प्रोक्ताः पाराशरस्मृतौ ।
व्याख्यानेऽस्माभिरत्रायं परहंसो विविच्यते ॥ ११ ॥
जिज्ञासुर्ज्ञानवांश्चेति परहंसो द्विधा मतः ।
प्राहुर्ज्ञानाय जिज्ञासोर्न्यासं वाजसनेयिनः ॥ १२ ॥
प्रव्राजिनो लोकमेतमिच्छन्तः[2] प्रव्रजन्ति हि ।
एतस्यार्थस्तु[3] गद्येन वक्ष्यते[4] मन्दबुद्धये ॥ १३ ॥

लोको हि द्विविधः, आत्मलोकोऽनात्मलोकश्चेति । तत्राऽऽत्मलोकस्य त्रैविध्यं बृहदारण्यके तृतीयाध्याये श्रूयते—"अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा[5] कर्मणा पितृलोको विद्यया देवलोकः" इति । आत्मलोकश्च तत्रैव श्रूयते—"यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति" इति । "आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य[6] कर्म *क्षीयते" इति च । यो मांसादिकपिण्डलक्षणात्स्वलोकं परमात्माख्यमहं ब्रह्मास्मीत्यविदित्वा म्रियते स स्वलोकः, परमात्माऽविदितोऽविद्यया व्यवहितः सन्नेनमवेत्तारं[7] प्रेतं मृतं न भुनक्ति शोकमोहादिदोषापनयनेन न पालयति । उपासकस्य ह निश्चितं कर्म न क्षीयत एकफलदानेनोपक्षीणं न भवति । कामितसर्वफलं मोक्षं च ददातीत्यर्थः । षष्ठाध्यायेऽपि—"+किमर्थं वयमध्येष्यामहे किमर्थं वयं यक्ष्यामहे किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ये= प्रजामीशिरे ते श्मशानानि भेजिरे । ये प्रजा नेशिरे तेऽमृतत्वं हि भेजिरे" । एवं सति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीत्यत्राऽऽत्मलोको विवक्षित इति गम्यते । स वा एष महानज आत्मेति प्रक्रान्तस्याऽऽत्मन एतच्छब्देन परामृष्टत्वात् । लोक्यतेऽनुभूयत इति लोकः । तथा चाऽऽत्मानुभवमिच्छन्तः प्रव्रजन्तीति श्रुतेस्तात्पर्यार्थः संपद्यते । स्मृतिश्च—

"ब्रह्मविज्ञानलाभाय[8] परहंससमाह्वयः ।
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥" इति ॥

इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया संपादितत्वादयं विविदिषासंन्यास इत्यभिधीयते । अयं च वेदनहेतुः ।

---

* ग. घ. पुस्तकयोः क्षीयत इति चेत आरभ्य, षष्ठाध्यायेऽपीत्येतदन्तःपाती ग्रन्थो न विद्यते। + क. ख. ग. घ. पुस्तकेषु किमर्थमित्यारभ्य किं प्रजयेत्येतदन्तर्वर्ती विषयो नहि । = क. ख. ग. घ. पुस्तकेषु ये प्रजामित्यतो भेजिरेवधिको ग्रन्थो न विद्यते ।

---

१ ङ. °षां सुस° । २ ङ. °तदिच्छ° । ३ क. ख. घ. °स्यार्थे तु ग° । ४ घ. वक्ष्ये मन्दत्वबु° । ५ ग. °णा पि° । ६ घ. हास्याऽऽयुः क्षी° । ७ क. °न्नेवम° । ८ ग. °विज्ञान° ।

संन्यासो द्विविधः, जन्मापादककाम्यकर्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्वक-दण्डधारणाद्याश्रमरूपश्चेति ।

"*पुंजन्म लभते माता पत्नी च प्रेषमात्रतः ।
ब्रह्म नष्टं सुशीलश्च ज्ञानं चैतत्प्रभावतः ॥"

त्यागश्च तैत्तिरीयादौ श्रूयते—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति । अस्मिंश्च त्यागे स्त्रियोऽप्यधिक्रियन्ते । ×भिक्षुकीत्यनेन स्त्रीणामपि प्राग्विवाहाद्वा वैधव्यादूर्ध्वं संन्यासेऽधिकारोऽस्तीति दर्शितम् । तेन भिक्षाचर्यं, मोक्षशास्त्रश्रवणम्, एकान्त आत्मध्यानं च ताभिः कर्तव्यं, त्रिदण्डादिकं च धार्यम् । इति मोक्षधर्मे चतुर्धरीटीकायां सुलभाजनकसंवादः । शारीरकभाष्ये वाचक्नवीत्यादि श्रूयते । देवताधिकरणन्यायेन विधुरस्याधिकारप्रसङ्गत्वेन तृतीयाध्याये चतुर्थपादे । अत एव मैत्रेयीवाक्यमाम्नायते—"येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवन्वेत्थ[1] तदेव मे ब्रूहि" इति । ब्रह्मचारिगृहस्थवानप्रस्थानां केनाचिन्निमित्तेन संन्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसः कर्मादित्यागो न विरुध्यते । श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशां तत्त्वविदां बहूनामुपलम्भात् । यस्तु दण्डधारणादिरूपो वेदनहेतुः परमहंसाश्रमः स पूर्वैराचार्यैर्बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते ॥ इति विविदिषासंन्यासः ॥

अथ विद्वत्संन्यासं निरूपयामः । सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परतत्त्वं विदितवद्भिः संपाद्यमानो विद्वत्संन्यासः । तं च याज्ञवल्क्यः संपादयामास । तथा हि विद्वच्छिरोमणिर्भगवान्याज्ञवल्क्यो विजिगीषुकथायां बहुविधेन तत्त्वनिरूपणेनाऽऽश्वलायनप्रभृतीन्विप्रान्पराजित्य वीतरागकथायां संक्षेपविस्तराभ्यामनेकधा जनकं बोधयित्वा मैत्रेयीं बुबोधयिषुस्तस्यास्त्वरया तत्त्वाभिमुख्याय स्वकर्तव्यं संन्यासं प्रतिजज्ञे । ततस्तां बोधयित्वा संन्यासं चकार । तदुभयं मैत्रेयीब्राह्मणस्याऽऽद्यन्तयोराम्नायते—"अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा† अरेऽहमस्मात्स्थानादस्मि" इति, "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार" इति च । कहोलब्राह्मणेऽपि विद्वत्संन्यास आम्नायते—"एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ

* क. ख. ग. घ. पुस्तकेष्वयं श्लोको न विद्यते । × क. ख. ग. घ. पुस्तकेषु भिक्षुकीत्यारभ्यात एव चतुर्थपादइत्यन्तो ग्रन्थो नहि । अयं चाधिकोऽसंगतश्च । † पुस्तकेषु प्रवव्राजेत्येवोपलभ्यते तदुपनिषत्पाठविरुद्धम् ।

१ ग. घ. भगवान्वेद ।

भिक्षाचर्यं चरन्ति ” इति । न चैतद्वाक्यं विविदिषासंन्यासपरमिति शङ्कनीयम् । पूर्वकालवाचिनो विदित्वेति क्त्वाप्रत्ययस्य ब्रह्मविद्वाचिनो ब्राह्मणशब्दस्य च बाधप्रसङ्गात् । न चात्र ब्राह्मणशब्दो जातिवाचकः । वाक्यशेषे पाण्डित्यबाल्यमौनशब्दाभिधेयैः श्रवणमनननिदिध्यासनैः साध्यं ब्रह्मसाक्षात्कारमभिप्रेत्याथ ब्राह्मण[1] इत्यभिहितत्वात् । ननु तत्र विविदिषासंन्यासोपेतः पाण्डित्यादौ प्रवर्तमानोऽपि ब्राह्मणशब्देन परामृष्टः । तस्माद्ब्राह्मणः पाडित्यं निर्विद्य[2] बाल्येन तिष्ठासेदिति चेत् । मैवम् । भाविनीं वृत्तिमाश्रित्य तत्र ब्राह्मणशब्दस्य प्रयुक्तत्वात् । अन्यथा कथमथ ब्राह्मण इति साधनानुष्ठानोत्तरकालवाचिनमथशब्दं प्रयुञ्जीत । शारीरब्राह्मणेऽपि विद्वत्संन्यासविविदिषासंन्यासौ स्पष्टं निर्दिष्टौ—“ एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ” इति । मुनित्वं मननशीलत्वं तच्चासति कर्तव्यान्तरे संभवतीत्यर्थात्संन्यास एवाभिधीयते । एतच्च वाक्यशेषे स्पष्टीकृतम्—“ एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ” इति । अयं लोक इत्यपरोक्षेणानु[3]भूयत इत्यर्थः । नन्वत्र मुनित्वेन फलेन[4] प्रलोभ्य विविदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपञ्चितः । अतो न संन्यासान्तरं कल्पनीयम् । मैवम् । वेदनस्यैव विविदिषासंन्यासफलत्वात् । न च वेदनमुनित्वयोरेकत्वं शङ्कनीयम् । विदित्वा मुनिर्भवतीति पूर्वोत्तरकालीनयोस्तयोः साध्यसाधनभावप्रतीतेः । ननु वेदनस्यैव परिपाकातिशयरूपमवस्थान्तरं मुनित्वम् । अतो वेदनद्वारा पूर्वसंन्यासस्यैवैतत्फलमिति चेत् । बाढम् । अत एव साधनरूपात्संन्यासादन्यं फलरूपमेतं[5] संन्यासं ब्रूमः । यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि संपादनीयानि, तथा विद्वत्संन्यासिनाऽपि जीवन्मुक्तये मनोनाशवासनाक्षयौ संपादनीयौ । एतच्चोपरिष्टात्प्रपञ्चयिष्यामः । सत्यप्यनयोः संन्यासयोरवान्तरभेदे परमहंसत्वाकारेणैकीकृत्य “ चतुर्विधा भिक्षवः ” इति स्मृतिषु चतुःसंख्योक्ता । पूर्वोत्तरयोरुभयोः[6] संन्यासयोः परमहंसत्वं जाबालश्रुताववगम्यते । तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योऽधिकारविशेषविधानेनोत्तरकालानुष्ठेयेन[7] च सहितं विविदिषासंन्यासमभिधाय पश्चादत्रिणा यज्ञोपवीतरहितस्याऽऽक्षिप्ते ब्राह्मण्ये सति पश्चादात्मज्ञानमेव यज्ञोपवीत-

१ ङ. °णशब्द इ° । २ घ. निर्वेद्य । ३ घ. °नुभवत इ° । ४ घ. फलत्वेन । ५ ग. घ. °मेनं स° । ६ ग. घ. पूर्वोक्तयो° । ७ घ. °कारीति विशेषविधानेनोक्तकाला° ।

मिति समादधौ । अतो बा[1]ह्योपवीताभावात्परमहंसत्वं निश्चीयते । तथाऽन्यस्यां कण्डिकायां परमहंसो नामेत्युपक्रम्य संवर्तकादी[2]न्बहून्[3]ब्रह्मविदो जीवन्मुक्तानुदाहृत्य "अव्यक्तलिङ्गा[4] अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः" इति विद्वत्संन्यासिनो दर्शिताः । तथा " त्रिकाण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्य[5]प्सु परित्यज्याऽऽत्मानमन्विच्छेत्" इति त्रिदण्डिनः सत एकदण्डलक्षणं विविदिषासंन्यासं विधाय तत्फलरूपं विद्वत्संन्यासमेवमुदाजहार—" यथाजातरूपधरो निर्द्वंद्वो निष्परिग्रहस्तत्र ब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्ष्यमाचरन्नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारे देवतागृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकंदरकोटरनिर्झरस्थण्डिलेष्वनिकेतवा[6]स्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूल[7]नपरः संन्यासेन देहत्यागं करोति स एव परमहंसो नाम " इति । तस्मादनयोरुभयोः परमहंसत्वं सिद्धम् । समानेऽपि परमहंसत्वे सिद्धे विरुद्धधर्माक्रान्तत्वादवान्तरभेदोऽप्यभ्युपगन्तव्यः । विरुद्धधर्मत्वं चाऽऽरुण्युपनिषत्परमहंसोपनिषदोः पर्यालोचनायामवगम्यते । केन भगवन्कर्माण्यशेषतो विसृजामीति शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्मत्यागरूपे विविदिषासंन्यासे शिष्येणाऽऽरुणिना पृष्टे सति गुरुः प्रजापतिः " शिखां यज्ञोपवीतम् " इत्यादिना सर्वत्यागमभिधाय " दण्डमाच्छादनं कौपीनं च परिग्रहेत् " इति दण्डादिस्वीकारं विधाय " त्रिसंध्यादौ स्नानमाचरेत् । संधिं[8] समाधावात्मन्याचरेत्सर्वेषु वेदेष्वा[9]रण्यमावर्तयेत् । उपनिषदमावर्तयेत् " इति वेदनहेतूनाश्रमधर्माननुष्ठेयतया विधत्ते । अथ योगिनां परमहंसानां कोऽयं मार्ग इति विद्वत्संन्यासे[10] नारदेन पृष्टे सति गुरुर्भगवान्प्रजापतिः स्वपुत्रमित्रेत्यादिना पूर्ववत्सर्वत्यागमभिधाय कौपीनदण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेदिति । दण्डादिस्वीकारस्य लौकिकत्वमभिधाय तच्च न मुख्योऽस्तीति शास्त्रीयत्वं प्रतिषिध्य कोऽयं मुख्य इति चेदयं मुख्यो न दण्डं न शिखां न यज्ञोपवीतं न चाऽऽच्छादनं चरति परमहंस इति दण्डादिलिङ्गराहित्यस्य शास्त्रीयतामुक्त्वा न शीतं न चोष्णमित्यादिवाक्येनाऽऽशाम्बरो[12] निर्नमस्कार इत्यादिवाक्येन च लोकव्यवहारातीतत्वमभिधा-

---

१ ग. घ. वाह्ययज्ञोप° । २ क. °दीन्ब्र° । ३ ग. घ. °न्बहुविधान्ब्र° । ४ घ. °ङ्गाचारा अनु° । ५ ग. घ. °त्यप्सु विसृज्या° । ६ ग. घ. °वासी निष्प्रयत्नो° । ख. °वासो निष्प्रयत्नो° । ७ घ. °लनाय सं° । ८ घ. संध्यां । ९ ग. घ. °ष्वारण्यमा° । १० ग. घ. ° वत्संन्यासम° । ११ क. ग. °ति स प° । १२क. ङ.° न °रो नमम° ।

यान्ते यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवतीत्यन्तेन ग्रन्थेन ब्रह्मानुभवमात्रपर्यवसानमाचष्टे। अतो विरुद्धधर्मोपेतत्वादस्त्येवानयोर्महान्भेदः। स्मृतिष्वप्ययं भेद उक्तादिशा द्रष्टव्यः।

"संसारमेव (वं) निःसारं दृष्ट्वा सारदिदृक्षया।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः॥
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम्।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्॥"

इत्यादि विविदिषासंन्यासः।

"यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम्।
तदैकदण्डं संगृह्य सोपवीत(तां) शिखां त्यजेत्॥
ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत्॥"

इत्यादि विद्वत्संन्यासः।

ननु कलाविद्यास्विव कदाचिदौत्सुक्यमात्रेणापि वेदितुमिच्छा संभवत्येवं[1] विद्वत्ताऽप्यापातदर्शिनः पण्डितंमन्यमानस्याप्यवलोक्यते, न च तौ प्रव्रजन्तौ दृष्टौ। अतो विविदिषाविद्वत्ते कीदृशे विवक्षिते इति चेत्। उच्यते। यथा तीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो व्यापारो न रोचते, भोजने च विलम्बो न सोढुं शक्यते। तथा जन्महेतुषु कर्मस्वत्यन्तमरुचि-र्वेदनसाधनेषु[3] च श्रवणादिषु त्वरा महती संपद्यते तादृशी विविदिषा संन्यासहेतुः।

विद्वत्ताया अवधिरुपदेशसाहस्र्यामभिहितः—

"देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते॥" इति॥

श्रुतावपि—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥" इति॥

परमपि हैरण्यगर्भादिकं पदमवरं यस्मादसौ परावरः, हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽ[4]नाद्यविद्यानिर्मितत्वेन ग्रन्थिवद्दृढसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यते। आत्मा साक्षी कर्ता वा, साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति वा न वा, ब्रह्मत्वेऽपि तद्बुद्ध्या वेदितुं शक्यं न वा, शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति न वा, इत्यादयः संशयाः, कर्माण्यनारब्धान्यागामिजन्मकारणानि, तदेतद्ग्रन्थ्यादित्रयमविद्यानिर्मितत्वादात्मदर्शनेन निवर्तते। स्मृतावप्ययमर्थ उपलभ्यते—

१ ग. घ. °त्यनेन ग्र°। २ ग. घ. तत्स्यात्परं। ३ घ. °धनश्र°। ४ क. °नात्मवि°।

"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाल्लोँकान्न हन्ति न निबध्यते ॥ " इति ॥

यस्य ब्रह्मविदो भावः सत्ता स्वभाव आत्मा नाहंकृतोऽहंकारेण तादात्म्याध्यासादन्तर्नाऽऽच्छादितः । बुद्धिलेपः संशयः । तदभावे त्रैलोक्यवधेनापि न बध्यते । किमुतान्येन कर्मणेत्यर्थः । नन्वेवं सति विविदिषासंन्यासफलेन तत्त्वज्ञानेनैवाऽऽगामिजन्मनो वारितत्वाद्वर्तमानजन्मशेषस्य भोगमन्तरेण विनाशयितुमशक्यत्वात्किमनेन विद्वत्संन्यासप्रयासेनेति चेत् । मैवम् । विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात्, तस्माद्वेदनाय यथा विविदिषासंन्यास एवं जीवन्मुक्तये विद्वत्संन्यासः संपादनीयः । इति विद्वत्संन्यासः ॥

अथ केयं जीवन्मुक्तिः, किं वा तत्र प्रमाणम्, कथं वा तत्सिद्धिः, सिद्ध्या(द्धौ) वा किं प्रयोजनमिति चेत् । उच्यते । जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति, तस्य निवारणं जीवन्मुक्तिः । नन्वयं बन्धः किं साक्षिणो निवार्यते, किं वा चित्तात् । नाऽऽद्यः, तत्त्वज्ञानेनैव निवारितत्वात् । न द्वितीयः, असंभवात् । यदा तु जलाद्द्रवत्वं निवार्येत, वह्नेर्वौष्णत्वं तदा चित्तात्कर्तृत्वादिनिवारणसंभवः, स्वाभाविकत्वं तु सर्वत्र समानम् । मैवम् । आत्यन्तिकनिवारणासंभवेऽप्यभिभवस्य संभवात् । यथा जलगतं द्रवत्वं मृत्तिकामेलनेनाभिभूयते, वह्नेरौष्ण्यं मणिमन्त्रादिना, तथा सर्वाश्चित्तवृत्तयो योगाभ्यासेनाभिभवितुं शक्यन्ते । ननु प्रारब्धं कर्म कृत्स्नाविद्यातत्कार्यनाशने प्रवृत्तस्य तत्त्वज्ञानस्य प्रतिबन्धं कृत्वा स्वफलदानाय देहेन्द्रियादिकमवस्थापयति, न च सुखदुःखादिभोगश्चित्तवृत्तिं विना संपादयितुं शक्यते ततः कथमभिभवः । मैवम् । अभिभवसाध्याया जीवन्मुक्तेरपि सुखातिशयरूपत्वेन प्रारब्धफल एवान्तर्भावात् । तर्हि कर्मैव जीवन्मुक्तिं संपादयिष्यति मा भूत्पुरुषप्रयत्न इति चेत् । कृषिवाणिज्यादावपि समानः पर्यनुयोगः । कर्मणः स्वयमदृष्टरूपस्य दृष्टसाधनसंपत्तिमन्तरेण फलजननासमर्थत्वादपेक्षितः कृष्यादौ पुरुषप्रयत्न इति चेज्जीवन्मुक्तावपि सैमं समाधानम् । सत्यपि पुरुषप्रयत्ने कृष्यादेः फलपर्यवसानं यत्र न दृश्यते तत्र प्रबलेन कर्मान्तरेण प्रतिबन्धः कल्पनीयः । तच्च प्रबलं कर्म स्वानुकूलवृष्ट्यभावादिरूपां दृष्टसामग्रीं संपाद्यैव प्रतिबध्नाति । स च प्रतिबन्धो विरोधिना प्रबलतरे-

---

१ घ. °तो नाहंकारेण तादात्म्यातिशयादन्तर्भावितो बुद्धि° । २ घ. °न्मनां निवा° । ३ ग. °ण निवर्तितुम° । क. घ. °ण निवारयितुमशक्यत्वात्कृतमनेन । ४ घ. °वृत्तिभिर्विना° । ५ ग. घ. समानं स° ।

णोत्तम्भकेन कारीरीष्ट्यादिरूपेण कर्मणाऽपनीयते। तच्च कर्म स्वानुकूलां वृष्टिलक्षणां दृष्टसामग्रीं संपाद्यैव प्रतिबन्धमपनयति। किं बहुना प्रारब्धकर्मण्ये[1]वात्यन्तभक्तेन भवता योगाभ्यासरूपस्य पुरुषप्रयत्नस्य वैयर्थ्यं मनसाऽपि चिन्तयितुमशक्यं, अथ वा प्रारब्धं कर्म यथा तत्त्वज्ञानात्प्रबलं तथा तस्मादपि कर्मणो योगाभ्यासः प्रबलोऽस्तु। तथा च योगिनामुद्दालकवीतहव्यादीनां[2] स्वेच्छया देहत्याग उपपद्यते। यद्यप्यल्पायुषामस्माकं तादृशो योगो न संभवति, तथाऽपि कामादिरूपचित्तवृत्तिनिरोधमात्रे योगे[3] को नाम प्रयासः। यदि शास्त्रीयस्य प्रयत्नस्य प्राबल्यं नाङ्गी क्रियते तदा चिकित्सामारभ्य मोक्षशास्त्रपर्यन्तानां सर्वेषामानर्थक्यं प्रसज्येत। नहि कदाचित्कर्मफलविसंवादमात्रेण दौर्बल्यमापादयितुं शक्यम्। अन्यथा कादाचित्कं पराजयं दृष्ट्वा सर्वैर्भूपैर्गजाश्वादिसेनोपेक्ष्येत। अत एवाऽऽनन्दबोधाचार्या आहुः—"नह्यजीर्णभयादाहारपरित्यागः, भिक्षुकभयाद्वा स्थाल्यनधिश्रयणं, यूकाभयाद्वा प्रावरणपरित्यागः" इति। शास्त्रीयप्रयत्नस्य प्राबल्यं वसिष्ठरामसंवादे विस्पष्टमवगम्यते। सर्वमेवेह हि सदेत्यारभ्य तदनु तदप्यवमुच्य साधु तिष्ठेत्यन्तेन ग्रन्थेन।

वसिष्ठः—" सर्वमेवेह हि सदा संसारे रघुनन्दन।
सम्यक्प्रयत्नात्सर्वेण पौरुषात्समवाप्यते ॥ "

सर्वं पुत्रवित्तस्वर्गलोकब्रह्मलोकादिफलं[4], पौरुषं पुत्रकामेष्टिकृषिवाणिज्यज्योतिष्टोमब्रह्मोपासनालक्षणः पुरुषप्रयत्नः।

" उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम्।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ "

उच्छास्त्रं परद्रव्यापहारपरस्त्रीगमनादि, शास्त्रितं नित्यनैमित्तिकानुष्ठानादि[5], अनर्थो नरकः, अर्थेषु स्वर्गादिषु परमो मोक्षः परमार्थः।

" आबाल्यादलमभ्यस्तैः शास्त्रसत्संगमादिभिः।
गुणैः पुरुषप्रयत्नेन[6] सोऽर्थः संपाद्यते हितः ॥ "

अलं संपूर्णं सम्यगित्यर्थः। गुणैर्युक्तेनेत्यध्याहारः। हितः श्रेयोरूपः।

श्रीरामः—" प्राक्तनं वासनाजालं नियोजयति मां यथा।
मुने तथैव तिष्ठामि कृपणः किं करोम्यहम् ॥ " इति ॥

वासना धर्माधर्मरूपा जीवगतसंस्काराः।

---

१ क. °र्मणैवा°। २ घ. °कप्रभृतीनां। ३ घ. कामादिधीवृत्तिनिरोधमात्र-योगे°। ४ घ. °लोकादि°। ५ ग. घ. °नानुष्ठानादिल°। ६ घ. °षप्रय°।

वसिष्ठः—“ अत एव हि हे राम श्रेयः प्राप्नोषि शाश्वतम् ।
स्वप्रयत्नोपनीतेन पौरुषेणैव नान्यथा ॥ ”

यतो वासनापरतन्त्रो भवानत एव हि पारतन्त्र्यनिवारणाय स्वोत्साहसंपादितो मनोवाक्कायजन्यः पुरुषव्यापारोऽपेक्षितः ।

“ द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ॥ ”

किं धर्माधर्मावुभावपि त्वां नियोजयत उतैकतर इति विकल्पः । एकतरपक्षेऽपि शुभोऽशुभो वे[1]त्यर्थातिसिद्धो विकल्पः ।

“ वासनौघेन शु[2]द्धेन तत्र चेदुपनीयसे ।
तत्क्रमेणाऽऽशु तेनैव पदं प्राप्स्यसि शाश्वतम् ॥ ”

[3]तत्र तेषु पक्षेषु ततस्तर्हि तेनैव क्रमेण शुभवा[4]सनामापितेनैवाऽऽचरणेन प्रयत्नान्तरनिरपेक्षेण । शाश्वतं पदं मोक्षम् ।

“ अथ चेदशुभो भावस्त्वां योजयति संकटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता स्वयम् ॥ ”

भावो [5]वासना । तत्तर्हि यत्नोऽशुभविरोधिशास्त्रीयधर्मानुष्ठानं तेन स्वयं जेतव्यः, न तु [6]युद्धे मृत्युमुखेनेव पुरुषान्तरमुखेन (ण) जेतुं शक्यः ।

“ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ”

उभयपक्षे तु शुभभागस्य प्रयत्ननैरपेक्ष्येऽप्यशुभभागं शास्त्रीयप्रयत्नेन निवार्य शुभमेव तस्य स्थाने समाचरेत् ।

“ अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
स्वमनः पुरुषार्थेन बलेन बलिनां वर ॥ ”

अशुभेषु परस्त्रीद्रव्यादिषु, शुभेषु शास्त्रार्थदेवताध्यानादिषु, पुरुषार्थेन पुरुषप्रयत्नेन, बलेन प्रबलेन ।

“ अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।
जन्तोश्चित्तं तु शिशुवत्तस्मात्तच्चालयेद्बलात् ॥ ”

यथा शिशुर्मृद्भक्षणान्निवार्य फलभक्षणे योज्यते, *मणिमुक्ताकर्षणान्निवार्य कन्दुकाद्याकर्षणे योज्यते तथा चित्तमपि सत्सङ्गेन [7]दुःसङ्गात्तद्विपरीतविषयान्निवारयितुं शक्यम् ।

---

* घ. पुस्तके ‘ मणिमुक्ताकर्षणान्निवार्य कन्दुकाद्याकर्षणे योज्यते ’ इयानंशो न हि ।

---

१ ग. घ. °त्यर्थसिद्धो । २ ङ. °शुभेनै° । ३ घ. तत्र तस्मिन्पक्षे तत्तर्हि । ४ ग. घ. °सनया प्रा° । ५ घ. भावना । ६ क. युद्धमुखे भृत्यमु° । ७ घ. °न तद्वि° ।

" समतासान्त्वनेनाऽऽशु न द्रागिति शनैः शनैः ।
पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥ "

चपलस्य पशोर्बन्धस्थाने प्रवेशनाय द्वावुपायौ भवतः । हरिततृणप्रदर्शनं कण्डूयनादिकं, वाक्पारुष्यं दण्डादिभर्त्सनं चेति । तत्राऽऽद्येन सहसा प्रवेश्यते, द्वितीयेनेतस्ततो धावञ्शनैः शनैः प्रवेश्यते । तथा शत्रुमित्रादिसमत्वं सुखबोधनम्, प्राणायामप्रत्याहारादिपुरुषप्रयत्नश्चेत्येतौ द्वौ चित्तशान्त्युपायौ । तत्राऽऽद्येन मृदुयोगेन शीघ्रं लालयेत् । द्वितीयेन हठयोगेन द्रागिति न लालयेत्, किं तु शनैः शनैः ।

" द्रागभ्यासवशाद्याति यदा ते वासनोदयम् ।
तदाऽभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ "

मृदुयोगाभ्यासाच्छीघ्रमेव सद्वासनोदये सति साफल्यमभ्यासस्य वक्तव्यं[1] न त्वल्पकालत्वेनासंभावना शङ्कनीया ।

" संदिग्धायामपि भृशं शुभामेव समाहर ।
शुभायां वासनावृद्धौ तात दोषो न कश्चन ॥ "

शुभवासनाऽभ्यस्यमाना संपूर्णा न वेति संदेहस्तदाऽपि शुभामभ्यसेदेव । तद्यथा सहस्रजपे प्रवृत्तस्य दशमी शतसंख्या यदा संदिग्धा तदा पुनरपि शतं जपेत् । असंपूर्तौ संपूर्तिः फलिष्यति, संपूर्तौ च तद्वृद्ध्या न सहस्रजपो दुष्यति तद्वत् ।

" अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥
ततः पक्वकषायेण नूनं विज्ञातवस्तुना ।
शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निरोधिना ॥
यद्पि(ति) शुभगमार्यसेवितं तच्छुभमनुसृत्य मनोज्ञभावबुद्ध्या ।
अधिगमय पदं यदद्वितीयं तदनु तदप्युत्रमुच्य साधु तिष्ठ ॥ " इति ॥

स्पष्टोऽर्थः । तस्माद्योगाभ्यासेन कामाद्यभिभवसंभवाज्जीवन्मुक्तौ न विवदितव्यम् ॥

इति जीवन्मुक्तिस्वरूपम् ॥

श्रुतिस्मृतिवाक्यानि जीवन्मुक्तिसद्भावे प्रमाणानि । तानि च कठवल्ल्यादिषु पठ्यन्ते—" विमुक्तश्च विमुच्यते " इति । जीवन्नेव दृष्टबन्धात्कामादेर्विशेषेण मुक्तः सन्देहपाते भाविबन्धाद्विशेषेण मुच्यते । वेदनात्प्रागपि शमदमादिसंपादनेन कामादिभ्यो मुच्यत एव, तथाऽप्युत्पन्नानां[2]

१ ग. घ. मन्तव्यं । २ घ. °त्पन्नकामानां ।

कामादीनां तत्र प्रयत्नेन निरोधः । अत्र तु धीवृत्त्यभावादनुत्पत्तिरेव ततो विशेषेणेत्युच्यते । तथा प्रलये देहपाते सति किंचित्कालं भाविदेहबन्धान्मुच्यते । अत्र त्वात्यन्तिको मोक्ष इत्यभिप्रेत्य विशेषेणेत्युक्तम् ।

बृहदारण्यके पठ्यते—

" यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ " इति ॥

श्रुत्यन्तरेऽपि—"सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव" इति । एवमन्यत्राप्युदाहार्यम् । स्मृतिषु जीवन्मुक्तस्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रमादिनामभिस्तत्र तत्र व्यवह्रियते । वसिष्ठरामसंवादे—" नृणां ज्ञानैकनिष्ठानाम् " इत्यारभ्य " सा किंचिदवशिष्यते " इत्यन्तेन ग्रन्थेन जीवन्मुक्तः पठ्यते ।

वसिष्ठः—" नृणां ज्ञानैकनिष्ठानामात्मज्ञानविचारिणाम् ।
सा* जीवन्मुक्ततोदेति विदेहोन्मुक्ततेव या ॥ "

ज्ञानैकनिष्ठत्वं लौकिकवैदिककर्मत्यागः । देहेन्द्रियसदसद्भावमात्रेण मुक्तिद्वयस्य विशेषो न त्वनुभवतः । द्वैतप्रतीतेरुभयत्राभावात् ।

श्रीरामः—" ब्रह्मन्विदेहमुक्तस्य जीवन्मुक्तस्य लक्षणम् ।
ब्रूहि येन तथैवाहं यते शास्त्रगया दृशा ॥ "

वसिष्ठः—" यथास्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ "

इदं प्रतीयमानं गिरिनदीसमुद्रादिकं जगत्प्रतिपत्तुर्देहेन्द्रियव्यवहारेण सह महाप्रलये परमेश्वरेणोपसंहृतं सत्स्वरूपोपमर्देनास्तं गतं भवति । अत्र तु न तथा, किं तु विद्यत एव देहेन्द्रियादिव्यवहारः । गिरिनद्यादिकं चेश्वरेणानुपसंहृतत्वाद्यथापूर्वमवतिष्ठमानं सत्सर्वैरन्यैः प्राणिभिर्विस्पष्टमवलोक्यते । जीवन्मुक्तस्य तत्प्रत्यायकवृत्त्यभावात्सुषुप्ताविव सर्वमस्तं गतं भवति । स्वयं प्रकाशमानं चिद्व्योम केवलमवशिष्यते । बद्धस्य सुषुप्तौ तात्कालिकवृत्त्यभावसाम्येऽपि भाविधीवृत्तिबीजसद्भावान्न जीवन्मुक्तत्वम् ।

" नोदेति नास्तमायाति सुखदुःखैर्मुखप्रभा ।
यथाप्राप्ते स्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ "

* घ. पुस्तके—' जीवन्मुक्तिस्ततो देहाद्विदेहान्मुक्त एव यौ ' इति भिन्नः पाठः ।

१ ग. घ. 'त्यनुदयमात्राद' । २ ग. घ. किंचित्कालं । ३ ग. घ. स्थिताः । ४ ङ. 'क्तविदेहमुक्तस्थि' । ५ क. ख. ङ. 'श्रम्यादि' । ६ क. ख. 'देहमुक्त' । ७ ग. घ. 'कधीवृ' । ८ ग. घ. 'दुःखे मुख' ।

मुखप्रभा हर्षः । स्रक्चन्दनसत्कारादिसुखे प्राप्तेऽपि संसारिण इव हर्षो नोदेति । मुखप्रभास्तमयो दैन्यम् । धनहानिधिक्कारादिदुःखे प्राप्तेऽपि न दीनो भवति । इदानींतनस्वप्रयत्नविशेषमन्तरेण प्रारब्धकर्मोपादितपूर्वप्रवाहागतभिक्षान्नादिकं यथाप्राप्तं तस्मिन्स्थितिर्देहरक्षा । समाधिदार्ढ्येन स्रक्चन्दनादिप्रतीत्यभावात् । कदाचिद्व्युत्थानदशायामापाततः प्रतीतावपि विवेकदार्ढ्येनैव हेयोपादेयत्वबुद्ध्यभावाद्धर्षादिराहित्यमुपपद्यते ।

" यो जागर्ति सुषुप्त(प्ति)स्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ "

चक्षुरादीन्द्रियाणां स्वस्वगोलकेष्ववस्थानेनोपरत्यभावाज्जागर्ति । मनोवृत्तिरहितत्वात्सुषुप्तिस्थः । अत एवेन्द्रियैरर्थोपलब्धिरित्येतस्य जागरणलक्षणा(णस्या)भावाज्जाग्रन्न विद्यते । सत्यपि बोधे जायमानो ब्रह्मवित्त्वाभिमानादिर्भोगार्थोपादितकामादिश्च धीदोषः । वासनावृत्तिराहित्येन तद्दोषाभावान्निर्वासनत्वम् ।

" रागद्वेषभयादीनामनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते ॥ "

रागानुरूप्यं भोजनादिप्रवृत्तिः । द्वेषानुरूप्यं बौद्धकापालिकादिभ्यो विमुखत्वम् । भयानुरूपं सर्पव्याघ्रादिभ्योऽपसर्पणम् । आदिशब्देन मात्सर्यादि, मात्सर्यानुरूपमितरयोगिभ्य आधिक्येन समाध्याद्यनुष्ठानम् । सत्यपि व्युत्थानदशायामीदृश आचरणे पूर्वाभ्यासेन प्रापिते विश्रान्तचित्तस्य कालुष्यरहितत्वादन्तःस्वच्छत्वम् । यथा व्योम्नि धूमधूलिमेघादियुक्तेऽपि निर्लेपस्वभावत्वादतिशयेन स्वच्छत्वं तद्वत् ।

" यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥ "

पूर्वार्धं विद्वत्संन्यासप्रस्तावे व्याख्यातम् । लोके बद्धस्य पुरुषस्य शास्त्रीयं कर्म कुर्वतोऽहं कर्तेति तदा चिदात्माऽहंकृतो भवति । स्वर्गं प्राप्स्यामीति हर्षेण बुद्धिर्लिप्यते । अकुर्वतस्तु त्यक्तवानस्मीत्यहंकृतत्वं स्वर्गालाभविषादादि(दे)र्लेपः । एवं प्रतिषिद्धकर्मणि लौकिककर्मणि च यथासंभवं योजनीयम् । जीवन्मुक्तस्य तु तादात्म्याध्यासाभावाद्धर्षाद्यभावाच्च न दोषद्वयम् ।

---

१ ग. घ. °मुत्पद्य° । २ च. जागरितलक्षणस्याभा° । ३ क. ङ. च. जायमाने । ४ घ. °दिभिश्च । ५ क. ख. घ. °सरणं । ६ घ. च. °दलच्छ° । ७ ग. घ. च. °ति चि° । ८ क. ख. ग. ङ. °षादो लेपः । ९ क. ख. मुक्तस्य ।

" यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयान्मुक्तः स जीवन्मुक्त उच्यते ॥ "

अधिक्षेपताडनादावप्रवृत्तादेतस्माल्लोको नोद्विजते । अत एवैतस्मिंल्लोकस्याधिक्षेपाद्यप्रवृत्तेः कस्यचिद्दुष्टस्य तत्प्रवृत्तावप्येतच्चित्ते तादृशविकल्पानुदयाच्चायमपि नोद्विजते ।

" शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ "

शत्रुमित्रमानावमानादिविकल्पाः संसारकलना[1]ः शान्ता यस्य सः । चतुःषष्टिविद्याः कलाः, तत्सद्भावेऽपि[2] तदभिमानव्यवहारयोरभावान्निष्कलत्वम् । चित्तस्य स्वरूपेण सद्भावेऽपि वृत्त्यनुदयान्निश्चित्तत्वम् । चिन्तेति पाठे वासनावशादात्मध्यानवृत्तिसद्भावेऽपि लौकिकवृत्त्यभावान्निश्चिन्तत्वम् ।

" यः समस्तार्थजातेषु व्यवहार्यपि शीतलः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ "

परगृहे विवाहोत्सवादौ स्वयं गत्वा तत्प्रीत्यै तदीयकार्येषु व्यवहरन्नपि लाभालाभयोर्हर्षविषादरूपं बुद्धिसंतापं न प्राप्नोति । एवमयं मुक्तः स्वकार्येऽपि शीतलः । न केवलं संतापाभावाच्छीतलत्वम्, किं तु परिपूर्णस्वरूपानुसंधानादपि ॥

इति जीवन्मुक्तलक्षणम् ॥

अथ विदेहमुक्तलक्षणम्—

" जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ "

यथा वायुः कदाचिच्चलनं त्यक्त्वा निश्चलरूपेणावतिष्ठते तथा मुक्तात्माऽप्युपाधिकृतं संसारं त्यक्त्वा स्वरूपेणावतिष्ठते ।

" विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥ "

उदयास्तमयौ हर्षविषादौ । न शाम्यति न च तत्परित्यागी लिङ्गदेहस्यात्रैव लीनत्वात् । सद्वाच्यो जगद्धेतुरविद्यामायोपाधिर्न प्राज्ञेश्वरः । असद्वाच्यो नापि भूतभौतिकः । न दूरस्थ इत्युक्त्या न मायातीतः । न चेत्युक्त्या स्थूलभुक्समीपस्थत्वं निषिध्यते । अहं न चेति न समष्टिश्च । नेतर इति न व्यष्टिश्च । व्यवहारयोग्यो विकल्पः कोऽपि नास्तीत्यर्थः ।

---

१ क. ख ङ. च. 'नाश्चतुःष' । २ क. ङ. 'पि लौकिकभाववृत्त्यभा' ।

"ततः[१] स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥"

एवंविधया विदेहमुक्त्यो सदृशत्वो[३]त्कर्षत्वोक्तेर्जीवन्मुक्तावपि यावद्यावन्नि-विकल्पातिशयस्तावत्तावदुत्तमत्वं द्रष्टव्यम् ।

भगवद्गीतासु द्वितीयाध्याये स्थितप्रज्ञः पठ्यते—

अर्जुन उवाच—"स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥"

प्रज्ञा तत्त्वज्ञानम् । तद्विविधम् । स्थितमस्थितं चेति । यथा जारेऽनुरक्त-नार्याः सर्वेष्वपि व्यवहारेषु बुद्धिर्जारमेव ध्यायति, प्रमाणप्रतीतानि क्रियमा-णान्यपि गृहकर्माणि सद्य एव विस्मर्यन्ते, तथा परवैराग्योपेतस्य योगाभ्यास-पाटवेनात्यन्तवशीकृतचित्तस्योत्पन्ने तत्त्वज्ञाने तद्बुद्धिर्जारमिव नैरन्तर्येण तत्त्वं ध्यायति तदिदं स्थित[६]प्रज्ञानम् । उक्तगुणरहितस्य केनापि पुण्यविशेषेण कदाचिदुत्पन्नेऽपि तत्त्वज्ञाने गृहकर्मवत्तत्रैव तत्त्वं विस्मर्यते तदिदमस्थितं प्रज्ञा-नम् । एतदेवाभिप्रेत्य वसिष्ठ आह—

"परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि ।
तदेवाऽऽस्वादयत्यन्तः परसङ्गरसायनम् ॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥" इति ॥

तत्र स्थितप्रज्ञः कालभेदाद्द्विविधः । समाहितो व्युत्थितश्च । तयोरुभयोर्ल-क्षणं पूर्वोत्तराभ्यामर्धाभ्यां पृच्छति—समाधिस्थस्य स्थितप्रज्ञस्य का भाषा, कीदृशैर्लक्षणवाचकैः शब्दैः सर्वैरयं भाष्यते, व्युत्थितः स्थितप्रज्ञः कीदृशं वाग्व्यवहारं करोति, तस्योपवेशनगमने मूढे[७]भ्यो विलक्षणे कीदृशे ।

श्रीभगवानुवाच—

"प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥"

कामास्त्रिविधाः, बाह्या आन्तरा वासनामात्ररूपाश्चेति । उपार्जितमोदका-दयो बाह्याः, आशामोदकादय आन्तराः, पथिगततृणादिवदापाततः प्रतीता वासनारूपाश्च । समाहितोऽशेषधीवृत्तिसंक्षयात्सर्वान्परित्यजति । अस्ति चास्य मुखप्रसादलिङ्गगम्यः संतोषः । स च न कामेषु किं त्वात्मन्येव कामानां

१ ङ. तदा । २ घ. °क्त्या सादृश्यत्वो° । ३ ग. °त्वोक्तेर्यथोक्तजीव° । च. °त्वोक्तेर्जी-व° । ४ घ. °वन्नि° । ५ घ. °प्रमिता° । ६ ग. घ. स्थितं ज्ञा° । ७ घ. मन्देभ्यो ।

त्यक्तत्वात् । बुद्धेः परमानन्दरूपेणा[1]ऽऽत्माभिमुखत्वाच्च । न चात्र संप्रज्ञातसमाधाविवाऽऽत्मानन्दो मनोवृत्त्योल्लिख्यते किं तु स्वप्रकाशचिद्रूपेणाऽऽत्मना । संतोषश्च न वृत्तिरूपः किं तु तत्संस्काररूपः । एवंविधैर्लक्षणवाचकैः शब्दैः समाहितो भाष्यते ।

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥"

दुःखं रागादिनिमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्तवृत्तिः । तादृशे दुःखे प्राप्ते सत्यहं पापी धिङ्मां दुरात्मानमित्यनुतापात्मिका तमोगुण[2]विकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्वेगः । यद्यप्ययं विवेक इवाऽऽभाति तथाऽपि पूर्वस्मिञ्जन्मनि चेत्तत्पापप्रवृत्तिप्रतिबन्धकत्वात्सप्रयोजनो भवति । इदानीं तु निष्प्रयोजन इति भ्रान्तित्वं द्रष्टव्यम् । सुखं राज्यपुत्रलाभादि[3]जन्या सात्त्विकी प्रीतिरूपाऽनुकूला चित्तवृत्तिस्तस्मिन्सुखे सत्यागामिनस्तादृशस्य सुखस्य कारणं पुण्यमननुष्ठाय वृथैव तदपेक्षा तामसी वृत्तिः स्पृहा । तत्र च सुखदुःखयोः प्रारब्धकर्मप्रापितत्वाद्व्युत्थितचित्तस्य वृत्तिसंभवाच्च तदुभ[4]यं समुत्पद्यते । उद्वेगस्पृहे तु न विवेकिनः संभवतः । तथा रागभयक्रोधाश्च तामसत्वेन कर्मप्रापितत्वाभावान्नास्य विद्यन्ते । एवंलक्ष[5]णलक्षितः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिःस्पृहत्वादिगमकं वचो भाषत इत्यभिप्रायः ।

"यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥"

यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते तादृशोऽन्यविषयस्तामसवृत्तिविशेषः स्नेहः । सुखहेतुः स्वकलत्रादिः शुभ[6]वस्तुगुणकथनादिप्रवर्तिका धीवृत्तिरभिनन्दः । अत्र गुणकथनस्य परप्ररोचनार्थत्वाभावेन व्यर्थत्वात्तद्धेतुरभिनन्दस्तामसः । असूयोत्पादनेन दुःखहेतुः परकीयविद्यादिरेनं प्रत्यशुभो विषयः । तन्निन्दाप्रवर्तिका बुद्धिप्रवृत्तिर्द्वेषः सोऽपि तामसः । तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात्त एते तामसा धर्माः कथं विवेकिनि संभवेयुः ।

"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥"

---

१ घ. °णाऽऽत्मतत्त्वाभि° । २ ग. घ. °णवृत्तिवि° । ३ ग. घ. °दिनिमित्तज° । ४ ग. घ. °भयमुपपद्य° । ५ घ. °क्षणः स्थिरधीः । ६ क. ख. ङ. च. °भतद्गुण° ।

व्युत्थितस्य समस्ततामसवृत्त्यभावः पूर्वश्लोकाभ्यामभिहितः । समाहितस्य तु वृत्तय एव न सन्ति कुतस्तामसत्वशङ्केत्यभिप्रायः ।

" विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ "

प्रारब्धं कर्म सुखदुःखहेतून्कांश्चिद्विषयांश्चन्द्रोदयान्धकारादिरूपान्स्वयमेव संपादयति । अन्यांस्तु गृहक्षेत्रादीन्पुरुषोद्योगद्वारेण । तत्र चन्द्रोदयादयः पूर्णेनेन्द्रियसंहारलक्षणेन समाधिनैव निवर्तन्ते नान्यथा । गृहादयस्तु समाधिमन्तरेणापि निवर्तन्ते । आहरणमाहार उद्योगः । निरुद्योगस्य गृहादिविषया निवर्तन्ते । रसस्तु न निवर्तते । रसो मानसी तृष्णा । साऽपि परमानन्दरूपस्य परस्य ब्रह्मणो दर्शने सति स्वल्पानन्दहेतुभ्यो निवर्तते । " किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः " इति श्रुतेः ।

" यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ "

उद्योगत्यागब्रह्मदर्शनप्रयत्नं कुर्वतोऽपि कादाचित्कप्रमादपरिहाराय समाध्यभ्यासः । तदेतत्किमासीतेतिप्रश्नोत्तरम् ।

" ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ "

असति समाध्यभ्यासे प्रमादप्रकार उपन्यस्तः । सङ्गो ध्येयविषयसंनिधिः, संमोहो विवेकपराङ्मुखत्वम् , स्मृतिविभ्रमस्तत्त्वानुसंधानाभावः, बुद्धिनाशो विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभावः ।

" रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ "

विधेयात्मत्वं वशीकृतमनस्त्वं, प्रसादो नैर्मल्यं बन्धराहित्यम् । समाध्यभ्यासयुक्तस्तद्वासनाबलाद्व्युत्थानदशायामिन्द्रियैर्व्यवहरन्नपि प्रसादं सम्यक्प्राप्नोति । तदेतत्किं व्रजेदित्यस्य (ति)प्रश्नोत्तरम् । उपरितनेनापि बहुना ग्रन्थेन स्थित-

१ ग. पूर्वमिन्द्रि° । घ. पूर्वेन्द्रि° ।

प्रज्ञः प्रपञ्चितः। ननु प्रज्ञायाः स्थित्युत्पत्तिभ्यां प्रागपि साधनत्वेन रागद्वेषादिराहित्यमपेक्षितम् । बाढम् । तथाऽप्यस्ति विशेषः, स च श्रेयोमार्गकारैर्दर्शितः—

" विद्यास्थितये प्राग्ये साधनभूताः प्रयत्ननिष्पाद्याः ।
लक्षणभूतास्तु पुनः स्वभावतस्ते स्थिताः स्थितप्रज्ञे ॥
जीवन्मुक्तिरि[1]तीमां वदन्त्यवस्थां स्थितात्मसंबन्धाम् ।
बाधितभेदप्रतिभामबाधितात्मावबोधसामर्थ्यात् ॥ " इति ॥

भगवद्भक्तो द्वादशाध्याये भगवता वर्णितः—

" अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ "

ईश्वरार्पितमनस्त्वेन समाहितस्यान्यानुसंधानाभावात् । व्युत्थितस्याप्युदासीनानुसंधानेन हर्षविषादाभावाच्च सुखदुःखसाम्यम् । एवं वक्ष्यमाणेष्वपि द्वंद्वेषु द्रष्टव्यम् ।

" यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ " इति ॥

अत्रापि पूर्ववद्विशेषो वार्तिककारैर्दर्शितः—

" उत्पन्नात्मप्रबोधस्य ह्यद्वे[2]ष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥ " इति ॥

गुणातीतश्चतुर्दशाध्याये वर्णितः—

अर्जुन उवाच—" कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ "

---

१ घ. 'क्तिमिती' । २ ग. घ. 'माणद्वे' ।

त्रयो गुणाः सत्त्वरजस्तमांसि, तेषां परिणामविशेषात्सर्वः संसारः प्रवर्तते। अतो गुणातीतत्वमसंसारित्वम् । जीवन्मुक्तत्वमिति यावत् । लिङ्गानि परेषामेतदीयगुणातीतत्वबोधकानि, आचारं आचरणं तदीयमनःसंचारप्रकारः कथमिति साधनप्रकारप्रश्नः ।

भगवानुवाच—" प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ "

प्रकाशप्रवृत्तिमोहाः सत्त्वरजस्तमोगुणाः । ते च जाग्रत्स्वप्नयोः प्रवर्तन्ते । सुषुप्तिसमाधिशून्यचित्तवृत्तित्वावस्थासु निवर्तन्ते । प्रवृत्तिश्च द्विविधा, अनुकूला प्रतिकूला चेति । तत्र मूढो जागरणे प्रतिकूलप्रवृत्तिं द्वेष्टि । अनुकूलप्रवृत्तिं काङ्क्षति । गुणातीतस्य त्वनुकूलप्रतिकूलाध्यासाभावाद्द्वेषाकाङ्क्षे न स्तः । यथा द्वयोः कलहं कुर्वतोरवलोकयिता कश्चित्तटस्थः स्वयं केवलमुदास्ते । न तु जयपराजयाभ्यामितस्ततश्चाल्यते। तथा गुणातीतो विवेकी स्वयमुदास्ते । गुणा गुणेषु वर्तन्ते, न त्वहमिति विवेकादौदासीन्यम् । अहमेव करोमीत्यध्यासो विचलनम् , न चास्य तदस्ति । तदिदं किमाचार इत्यस्य प्रश्नस्योत्तरम् । समसुखदुःखादीनि लिङ्गान्यव्यभिचारिभक्तिसहितज्ञानध्यानाभ्यासेन परमात्मसेवा इ(चे)ति गुणात्ययसाधनम् ।

ब्राह्मणो व्यासादिभिर्वर्णितः—

" अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधायिनं शान्तं तं देवा ब्राह्मणं विदुः ॥ "

ब्राह्मणशब्दो ब्रह्मविद्वाचीत्यथ ब्राह्मण इति श्रुत्या वर्णितम् । ब्रह्मविदश्च विद्वत्संन्यासाधिकारात् । "यथाजातरूपधरो नाऽऽच्छादनं चरति स परम-

१ ग. घ. °रस्तदी° । २ ग. घ. च. °प्रश्नः । ३ क. ख. ङ. °ध्यासश्चातत्त्वम् । ४ घ. °-

हंसः" इत्यादिश्रुत्या परिग्रहराहित्यस्य मुख्यत्वाभिधानादनुत्तरीयत्वादिकं तस्य युक्तम् ।

" येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥ "

देहनिर्वाहायाशनाच्छादनशयनस्थानापेक्षायामप्यशनादिगतौ गुणदोषौ [1]नोत्पद्येते । उदरपूरणपुष्ट्यादिरूपस्य निर्वाहस्य समत्वान्निष्प्रयोजनस्य गुणदोषविचारस्य चित्तदोषत्वात् । अत एव भागवते पठ्यते—

" किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥ " इति ॥

" कन्थाकौपीनवासास्तु दण्डधृग्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ॥ "

ब्रह्मोपदेशादिना प्राण्यनुजिघृक्षायामुत्तमत्वज्ञापनेन श्रद्धामुत्पादयितुं दण्डकौपीनादिलिङ्गं धारयेत् । " कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकोपकारार्थाय च परिग्रहेत् " इति श्रुतेः । अनुजिघृक्षयाऽपि तदीयं[3] गृहकृत्यादिवार्तां न कुर्यात्किं तु ध्यानपरो भवेत् । " तमेवैकं[4] विजानथाऽऽत्मानमन्या वाचो विमुञ्चथ " इति श्रुतेः ।

" तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥" इति श्रुतेश्च ॥

ब्रह्मोपदेशस्त्वन्या वाङ्न भवतीति न विरोधी । तच्च ध्यानमेकाकित्वे [6]निर्विघ्नं भवति । अत एव स्मृत्यन्तरेऽभिहितम्—

" एको भिक्षुर्यथोक्तः स्याद्द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥
नगरं नहि कर्तव्यं ग्रामो वा मिथुनं तथा[7] ।
ग्रामवार्ता हि तेषां स्याद्भिक्षावार्ता परस्परम् ॥ " इति ॥

" स्नेहपैशुन्यमात्सर्यं संनिकर्षात्प्रवर्तते ।
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ॥
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ "

विशिष्टैः[9] संसारिभिः प्रणमतां पुरुषाणामाशीर्वादः[10] प्रयुज्यते । यस्य यदपेक्षि-

१ क. ख. ग. घ. नान्विष्येते । २ क. °घृक्षयोत्त° । ३ घ. °यस्त्वयं गृ° । ४ ङ. °कं जानथा° । ५ घ. जानीथा° । ६ घ. निविष्टे संभ° । ७ ग. घ. °था । राजादिवार्ता ते° । च. °था । राजादिवार्ता तेषु स्या° । ८ घ. °शिष्यम° । ९ घ. संन्यासिभिः । १० घ. °र्वादो न प्र° ।

तं तं प्रति तदभिवृद्धिप्रार्थनमाशीः। तथा च पुरुषाणां भिन्नरुचित्वात्तदभिमतान्वेषणे व्यग्रचित्तस्य लोकवासना वर्धते। सा च ज्ञानविरोधिनी। तथा च स्मृत्यन्तरम्—

"लोकवासनया जन्तोः शास्त्रवासनयाऽपि च।
देहवासनया ज्ञानं यथावन्नैव जायते॥"

एतच्चाऽऽरम्भनमस्कारादिष्वपि द्रष्टव्यम्। आरम्भः स्वार्थं परोपकारार्थं वा गृहक्षेत्रादिसंपादनप्रयत्नः। तावेतावाशीर्वादारम्भौ मुक्तेन त्याज्यौ। न चाऽऽशीर्वादाभावे प्रणतानां नृणां खेदः शङ्कनीयः। लोकवासनाखेदयोरुभयोः परिहाराय निखिलाशीर्वादप्रतिनिधित्वेन नारायणशब्दप्रयोगात्। आरम्भस्तु सर्वोऽपि दुष्ट एव। तथा च स्मृतिः—

"सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः।" इति।

नमस्कारोऽपि विविदिषासंन्यासिनोऽभिहितः—

"यो भवेत्पूर्वसंन्यासी तुल्यो वै धर्मतो यदि।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन॥" इति॥

तत्र पूर्वत्वधर्मतुल्यत्वविचारे चित्तं विक्षिप्यते। अत एव नमस्कारमात्र एव बहवः कलहायमाना उपलभ्यन्ते। तत्र निमित्तं वार्तिककारैर्दर्शितम्—

"प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः।
संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः॥" इति॥

मुक्तस्य नमस्कारभावो भगवत्पादैर्दर्शितः—

"नामादिभ्यः परे भूम्नि स्वाराज्येऽवस्थितो यदा।[2]
प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तदा[3]॥" इति॥

चित्तकालुष्यहेतोर्नमस्कारस्य प्रतिषेधेऽपि सर्वसाम्यबुद्ध्या प्रसादहेतुर्नमस्कारोऽभ्युपेयते। तथा च स्मृतिः—

"ईश्वरो जीवकलया प्रविष्टो भगवानिति।
प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्॥" इति॥

स्तुतिर्मनुष्यविषया प्रतिषिध्यते न त्वीश्वरविषया। तथा च बृहस्पतिस्मृतिः—

"आदरेण यथा स्तौति धनवन्तं धनेच्छया।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात्॥" इति॥

---

१ क. ख. ङ. °णमतां खे°। २ ग. घ. च. °ज्ये चेत्स्थितोऽद्वयः। प्र°। ३ घ. भवेत्।

अक्षीणत्वमदीनत्वम् । अत एव स्मृतिः—

“ अलब्ध्वा न विषीदेत काले कालेऽशनं क्वचित् ।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ॥ ” इति ॥

क्षीणकर्मत्वं विधिनिषेधा[1]नधीनत्वम् । “ निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ” इति स्मरणात् । एतदेवाभिप्रेत्य भगवताऽप्युक्तम्—

“ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ” इति ॥

नारदः—“ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥ ” इति ॥

“ योऽहेरिव[2] गणाद्भीतः सन्मानान्नरकादिव ।
कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ ”

राजवार्तादि तेषां स्यादित्युक्तत्वात्सर्पव[3]द्गणाद्भीतिरुपपद्यते, सन्मानस्याऽऽसक्तिकारणतया पुरुषार्थविरोधित्वान्नरकवद्धेयत्वम्* । अत एव स्मृतिः—

“ असन्मानात्तपोवृद्धिः सन्मानात्तु तपःक्षयः ।
अर्चितः पूजितो विप्रो दुग्धा गौरिव सीदति ॥ ”

एतदेवाभिप्रेत्यावमान उपादेयतया स्मर्यते—

“ तथा चरेत वै योगी सतां धर्म[5]मदूषयन् ।
जना यथाऽवमन्येरन्गच्छेयुर्नैव [6]संगतिम् ॥ ” इति ॥

स्त्रीषु द्विविधो दोषः, प्रतिषिद्धत्वं जुगुप्सितत्वं चेति । तत्र प्रतिषिद्धमात्रं कदाचिद्रागात्प्रारब्धबलादुल्लङ्घ्यते । तदेतदभिप्रेत्याऽऽह स्मृतिः—

“ मात्रा स्वस्रा दुहित्रा वा [9]नैकशय्यासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ”

तथा च [10]स्मृतिभिर्जुगुप्सा दर्शिता—

“ स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ॥

---

* क. ख. ङ. पुस्तकेषु ‘ मरणवदिति वा पाठः ’ इत्यधिकमुपलभ्यते ।

---

१ ग. घ. च. °धातीतत्व° । २ क. °व गुणाद्भी° । ३ क. °वद्गुणाद्भीरुत्पद्यते । ४ ग. घ. च. गच्छति । ५ ग. घ. च. °मनुस्मरन् । ६ घ. ङ. संगतम् । ७ ङ. च. °चित्प्रा° । ८ क. ख. °गाद्बलाद्° । ९ ग. घ. च. न विविक्तासनो । १० ग. घ. च. स्मृतिभ्यो जुगुप्सा वर्णिता ।

चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
+ये रमन्ति नरास्तत्र कृमितुल्याः कथं न ते ॥ ”

अतः प्रतिषेधजुगुप्सयोरुभयोर्विवक्षया कुणपदृष्टान्तोऽत्राभिहितः ।

“ येन पूर्णमिवाऽऽकाशं भवत्येकेन सर्वदा ।
शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ”

संसारिणामेकाकित्वेनावस्थानं भयालस्यादिहेतुत्वाद्वर्ज्यम् । जनसंबन्धश्चा[1]तथाविधत्वादभ्युपेयः । योगिनस्तु तद्विपरीतत्वमेकाकित्वे सत्यविघ्नेन ध्यानानुवृत्तौ परिपूर्णेन परमानन्दात्मना सर्वमाकाशं पूर्णमिवावभासते । अतो भयालस्यशोकमोहादयो न भवन्ति,

“ *यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ” इति श्रुतेः ॥

जनाकीर्णमिति जनसहितं स्थानं राजवार्तादिना ध्यानविरोधित्वादात्मप्रतीतिरहितं तच्छून्यमिव चित्तं क्लेशयति । जगतो मिथ्यात्वादात्मनः पूर्णत्वाच्चेत्यर्थः ।

अतिवर्णाश्रमी सूतसंहितायां मुक्तिखण्डे पञ्चमाध्याये[3] परमेश्वरेण वर्णितः—

“ ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
अतिवर्णाश्रमी तेऽपि क्रमाच्छ्रेष्ठा विचक्षणाः ॥
अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न कस्यापि भवेच्छिष्यो यथाऽहं पुरुषोत्तम[4] ॥
अतिवर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते ।
तत्समो नाधिकश्चास्मिँल्लोकेऽस्त्येव न संशयः ॥
यः शरीरेन्द्रियादिभ्यो विभिन्नं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम्[5] ॥
परं तत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
यो वेदान्तमहावाक्यश्रवणेनैव केशव ॥
आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत् ।
[6]योऽवस्थात्रयनिर्मुक्तमवस्थासाक्षिणं सदा ॥

---

+ क. ख. ङ. पुस्तकेषु “ ये नमन्ति नरास्तेभ्यः साहसं किमतः परम् ” इति वा पाठ इत्यधिकम्। * क. ख. ग. ङ. च. एषु पुस्तकेष्वेतादृगर्धं नास्ति ।

---

१ ग. घ. °संबन्धस्त्वतथा° । च. °संमर्दस्त्वतथा° । २ ग. घ. च. जनाकीर्णस्थानं राजवार्तादिध्या° । ३ घ. °ये विष्णुं प्रति प° । ४ ख. ग. ङ. पुरुषोत्तमः । ५ क. घ. स्वयंप्रभुम् । ६ घ. यो वर्णाश्रमनिर्मुक्तमवस्थात्रयसाक्षिणम् । म°

महादेवं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥
नाऽऽत्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु ।
तथा मत्संनिधावेव समस्तं चेष्टते जगत् ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
सुवर्णहारकेयूरकटकस्वस्तिकादयः ।
कल्पिता मायया तद्वज्जगन्मय्येव सर्वदा ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव कल्पितम् ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ॥
व्योमवत्सर्वदा व्याप्तः सर्वसंबन्धवर्जितः ।
एकरूपो महादेवः स्थितः सोऽहं परामृतः ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
विनष्टदिग्भ्रमस्यापि यथा पूर्वा विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्नहि ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।
तथा जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।
स वर्णानाश्रमान्सर्वानतीत्य स्वात्मनि स्थितः ॥
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥
यस्त्यक्त्वा स्वाश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ॥
न देहो नेन्द्रियं प्राणो न मनोबुद्ध्यहंकृती ।
न चित्तं नैव माया च न च व्योमादिकं जगत् ॥

न कर्ता नैव भोक्ता च न च भोजयिता तथा ।
केवलं चित्सदानन्दो ब्रह्मैवाऽऽत्मा यथार्थतः ॥
जलस्य चलनादेव चञ्चलत्वं यथा रवेः ।
तथाऽहंकार[1]संसारादेव संसार आत्मनः ॥
तस्मादन्यगता वर्णा आश्रमा अ[2]पि केशव ।
आत्मन्यारोपिता एव भ्रान्त्या ते नाऽऽत्मवे[3]दिनः ॥
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्प[4]ना ।
आत्मविज्ञानिनामस्ति तथा नान्यज्जनार्दन ॥
आत्मविज्ञानिनां निष्ठामहं वेदाम्बुजेक्षण ।
मायया मोहिता मर्त्या नैव जानन्ति सर्वदा ॥
न मांसचक्षुषा निष्ठा ब्रह्मविज्ञानिनामियम् ।
द्रष्टुं शक्या स्वतःसिद्धा विदुषां सैव केशव ॥
यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वान्सुषुप्तस्तत्र केशव ॥
एवमात्मानमद्वंद्वं निर्विकारं निरञ्जनम् ।
नित्यशुद्धं निराभासं चिन्मात्रं परमामृतम् ॥
यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ।
सोऽतिवर्णाश्रमी प्रोक्तः स एव गुरुरुत्तमः ॥ " इति ॥

तदेवं " विमुक्तश्च विमुच्यते " इत्यादिश्रुतयो जीवन्मुक्तस्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रम(मि)प्रतिपादकस्मृतिवाक्यानि[च] जीवन्मुक्तिसद्भावे प्रमाणानीति स्थितम् ॥

इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके प्रथमं जीवन्मुक्तिप्रमाणप्रकरणम् ॥ १ ॥

---

१ क. ख. °रचलनादे°। घ. °रसंसर्गादे°। २ ङ. इति । ३ ग. घ. °दिनाम् । न । ४ ङ. °ल्पनाः। आ°। ५ ग. घ. च. °निनां नास्ति तथा चान्यजनार्दन । स्वात्मविज्ञानिनां निष्ठामीदृशीमम्बु° । ६ ग. घ.च. निराकारं । ७ क. ग. घ. च. °सं सच्चिन्मात्रं परामृ° ।

# अथ द्वितीयं वासनाक्षयप्रकरणम् ।

अथ जीवन्मुक्तिसाधनं निरूपयामः । तत्त्वज्ञानमनोनाशवासनाक्षयास्त-त्साधनम् । अत एव वासिष्ठरामायणे उपशमप्रकरणस्यावसाने " जीवन्मुक्त-शरीराणाम् " इत्यस्मिन्प्रस्तावे वसिष्ठ आह—

" वासनाक्षयविज्ञानमनोनाशो महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदा[1] इमे ॥ " इति ॥

अन्वयमुक्त्वा व्यतिरेकमाह—

" त्रय एते समं यावन्न[3] स्वभ्यस्ता मुहुर्मुहुः ।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ॥ " इति ॥

समकालाभ्यासाभावे बाधकमाह—

" एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः +संकलिता इव ॥ " इति ॥

यथा संध्यावन्दने मार्जनेन सह विनियुक्तानां " आपो हि ष्ठा " इत्या-दीनां तिसृणामृचां मध्ये प्रतिदिनमेकैकस्या ऋचः पाठे शास्त्रीयानुष्ठानं न सिध्यति । यथा वा षडङ्गमन्त्राणामेकैकमन्त्रेण न सिद्धिः । यथा वा लोके शाक-सूपौदनादीनामेकैकेन न भोजनसिद्धिस्तद्वत् । चिराभ्यासस्य प्रयोजनमाह—

" त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ " इति ॥

तस्यैव व्यतिरेकमाह—

" जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ " इति ॥

न केवलमेकैकाभ्यासे फलाभावः किं तु तत्स्वरूपमपि न सिध्यतीत्याह—

" तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितानि हि ॥ " इति ॥

+ क. ख. ङ. पुस्तकेषु संकीर्तिता इति वा पाठ इत्यधिकम् ।

१ क. ख. ग. घ. च. °णस्या° । २ ग. घ. च. °दायिनः । इति । ३ ग. न त्वभ्य° घ. न स्वाभ्यस्ता । ४ घ. च. चिरयत्नतः । ५ घ. °न्दनमार्जनेन सह नि° ।

त्रयाणामेतेषां मध्ये द्वयोर्द्वयोर्मेलनेन त्रीणि द्वंद्वानि भवन्ति । तत्र मनोनाशवासनाक्षयद्वंद्वस्यान्योन्यकारणत्वं व्यतिरेकमुखेनाऽऽ(णाऽऽ)ह—

" यावद्विलीनं न मनो न तावद्वासनाक्षयः ।
न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति ॥ "

प्रदीपज्वालासंतानवद्वृत्तिसंतानरूपेण परिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते । तस्य नाशो नाम वृत्तिरूपपरिणामं परित्यज्य निरुद्धत्वाकारेण परिणामः । तथा च पतञ्जलिर्योगशास्त्रे सूत्रयामास—" व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः " इति । व्युत्थानसंस्कारा अभिभूयन्ते । निरोधसंस्काराः प्रादुर्भवन्ति । निरोधयुक्तः क्षणाश्चित्तेनान्वीयते । सोऽयं मनोनाश इत्यवगन्तव्यम् । पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारो वासना । पूर्वपूर्वाभ्यासेन चित्ते वास्यमानत्वात् । तस्याश्च वासनायाः क्षयो नाम विवेकजन्यायां शान्तिदान्तिशुद्धवासनायां दृढायां सत्यपि बाह्यनिमित्ते क्रोधाद्यनुत्पत्तिः । तत्र मनोनाशाभावे वृत्तिषूत्पद्यमानासु कदाचिद्बाह्यनिमित्तेन क्रोधाद्युत्पत्तेर्नास्ति वासनाक्षयः । अक्षीणायां च वासनायां तथैव वृत्त्युत्पादनान्नास्ति मनोनाशः । तत्त्वज्ञानमनोनाशयोः परस्परकारणत्वं व्यतिरेकमुखेनाऽऽ(णाऽऽ)ह—

" यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः ।
यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ॥ " इति ॥

इदं सर्वमात्मैव प्रतीयमानं रूपरसादिकं जगन्मायामयं न त्वेतद्वस्तुतोऽस्तीति निश्चयस्तत्त्वज्ञानम् । तस्यानुत्पत्तौ रूपरसादिविषयाणां सद्भावे सति तद्गोचराश्चित्तवृत्तयो न निवारयितुं शक्यन्ते । यथा प्रक्षिप्यमाणेष्विन्धनादिषु वह्निज्वाला न वार्यन्ते तद्वत् । असति च चित्तोपशमे वृत्तिभिर्गृह्यमाणेषु रूपादिषु सत्सु " नेह नानाऽस्ति किंचन " इति श्रुतेर्यजमानः प्रस्तर इत्यादेरिव प्रत्यक्षविरोधशङ्कया ब्रह्माद्वितीयमित्येतादृशस्तत्त्वनिश्चयो नोदीयात् । वासनाक्षयतत्त्वज्ञानयोः परस्परकारणत्वं व्यतिरेकमुखेनाऽऽ(णाऽऽ)ह—

" यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः ।
यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः ॥ " इति ॥

---

१ ङ. °धयो° । २ घ. शान्त्यादिवा° । च. शान्तिवा° । ३ ग. °न्तिवा° । ४ ग. घ. च. निवार्यते । ५ ग. घ. च. °षु " ने° ।

क्रोधादिवासनास्वनष्टासु शमादिसाधनाभावान्न तत्त्वज्ञानमुदेति । अज्ञाते चाद्वितीयब्रह्मतत्त्वे क्रोधादिनिमित्तस्य सत्यत्वभ्रमानपायान्न वासना हीयते । तथोक्तानां त्रयाणां द्वंद्वानामन्योन्यकारणत्वमन्वयमुखेन वयमुदाहरामः । मनसि नष्टे सति संस्कारोद्बोधकस्य बाह्यनिमित्तस्याप्रतीतौ वासना क्षीयते, क्षीणायां च वासनायां हेत्वभावेन क्रोधादिवृत्त्यनुदयान्मनो नश्यति । तदिदं मनोनाशवासनाक्षयद्वंद्वम् । "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेरात्मैक्याभिमुखवृत्तेर्दर्शनहेतुत्वादितरकृत्स्नवृत्तिनाशस्य तत्त्वज्ञानहेतुत्वमवगम्यते । सति च तत्त्वज्ञाने मिथ्याभूते जगति नरविषाणादाविव धीवृत्त्यनुदयादात्मनश्च दृष्टत्वेन पुनर्वृत्त्यनुपयोगान्निरिन्धनाग्निवन्मनो नश्यति । तदिदं मनोनाशतत्त्वज्ञानयोर्द्वंद्वम् । तत्त्वज्ञानस्य क्रोधादिवासनाक्षयहेतुतां वार्तिककार आह—

"रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥" इति ॥

क्रोधादिवासनाक्षयरूपस्य शमादेर्ज्ञानहेतुत्वं प्रसिद्धम् । वसिष्ठोऽपि—

"गुणाः शमादयो ज्ञानाच्छमादिभ्यस्तथा ज्ञता ।
परस्परं विवर्धेते द्वे पद्मसरसी इव ॥" इति ॥

तदिदं वासनाक्षयतत्त्वज्ञानयोर्द्वंद्वम् । तत्त्वज्ञानादीनां त्रयाणां संपादने साधनमाह—

"तस्माद्राघव यत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रयेत् ॥" इति ॥

पौरुषो यत्नः केनाप्युपायेनावश्यं संपादयिष्यामीत्येवंविधोत्साहरूपो निर्बन्धः । विवेको नाम विभज्यनिश्चयः । तत्त्वज्ञानस्य श्रवणादिकं साधनं, मनोनाशस्य योगः, वासनाक्षयस्य प्रतिकूलवासनोत्पादनमिति । भोगेच्छायाः स्वल्पाया अभ्युपगमे "हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति न्यायेनातिप्रसङ्गस्य दुर्वारत्वाद्दूरत इत्युक्तम् । ननु पूर्वत्र विविदिषासंन्यासस्य तत्त्वज्ञानं फलम् । विद्वत्संन्यासस्य जीवन्मुक्तिरिति व्यवस्था वर्णिता । तथा च सति प्रथमतस्तत्त्वज्ञानं संपाद्य पश्चाद्विद्वत्संन्यासं कृत्वा जीवतः स्वस्य बन्धरूपयोर्वासनामनोवृत्त्योर्विनाशः संपादनीय इति प्रतिभाति । अत्र तु तत्त्वज्ञानादीनां सहैवाभ्यासो नियम्यते । अतः पूर्वोत्तरविरोध इति चेत् ।

---

१ क. ख. ङ. 'न च व' । २ घ. 'त्साहानुरू' । ३ ङ. 'दूरीकृत' । ४ ग. घ. च. इति भाति ।

नायं दोषः। प्रधानोपसर्जनभावेन व्यवस्थोपपत्तेः। विविदिषासंन्यासिनस्त-त्त्वज्ञानं प्रधानम्। मनोनाशवासनाक्षयावुपसर्जनीभूतौ। विद्वत्संन्यासिनस्तु तद्वैपरीत्यम्। अतः सहाभ्यास उभयत्राप्यविरुद्धः। न च तत्त्वज्ञानोत्पत्तिमात्रेण कृतार्थस्य किमुत्तरकालीनेनाभ्यासप्रयासेनेति शङ्कनीयम्। जीवन्मुक्तिप्रयोजननिरूपणेन परिहरिष्यमाणत्वात्। ननु विद्वत्संन्यासिनो वेदनसाधनश्रवणाद्यनुष्ठानवैफल्याद्वेदनस्य च स्वरूपेण कर्तुमन्यथाकर्तुमशक्यस्याननुष्ठेयत्वादुपसर्जनेनाप्युत्तरकालीनोऽभ्यासः कीदृश इति चेत्, केनापि द्वारेण पुनः पुनस्तत्त्वानुस्मरणमिति ब्रूमः। तादृशश्चाभ्यासो लीलोपाख्याने दर्शितः—

" तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम्।
एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः॥
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा।
इदं जगदहं चेति बोधाभ्यासं विदुः परम्॥ " इति॥

मनोनाशवासनाक्षयाभ्यासावपि तत्रैव दर्शितौ—

" अत्यन्ताभावसंपत्तौ ज्ञातुर्ज्ञेयस्य वस्तुनः।
युक्त्या शास्त्रैर्यतन्ते ये ते तत्राभ्यासिनः स्थिताः॥ " इति॥

ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसंपत्तिः। स्वरूपेणाप्यप्रतीतिरत्यन्ताभावसंपत्तिः। युक्तिर्योगः। सोऽयं मनोनाशाभ्यासः।

" दृश्यासंभवबोधेन रागद्वेषादितानवे।
रतिर्नवोदिता याऽसौ ब्रह्माभ्यासः स उच्यते॥ " इति॥

सोऽयं वासनाक्षयाभ्यासः। तेष्वेतेषु त्रिष्वभ्यासेषु साम्येन प्रतीयमानेषु प्रधानोपसर्जनभावेन न विवेक्तुं शक्यत इति चेत्। मैवम्। प्रयोजनानुसारेण विवेक्तुं शक्यत्वात्। मुमुक्षोः पुरुषस्य जीवन्मुक्तिर्विदेहमुक्तिश्चेति प्रयोजनद्वयम्। अत एव " विमुक्तश्च विमुच्यते " इति श्रूयते। तत्र जीवतः पुरुषस्य दैवसंपदा मोक्षः, आसुरसंपदा बन्धः। एतच्च षोडशाध्याये भगवताऽभिहितम्—

" दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता॥ " इति॥

---

१ ग. घ. च 'नस्तद्विपरीतम्। २ ङ. कर्तुमकर्तुमन्यथाकर्तुं श°। ३ ग. घ. ङ. °र्जन-त्वेऽप्यु°। ४ ग. ङ. च °ति। ननु मनो°। ५ ग. घ. च. सामान्येन। ६ ख. घ. च. °न नि°। ७ घ. °क्यते कथमिति।

ते च संपदौ तत्रैवाभिहिते—

" अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत * ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ " इति ॥

पुनरप्या ध्यायपरिसमाप्तेरासुरसंपत्प्रपञ्चिता । तत्राशास्त्रीयायाः स्वभावसिद्धाया आसुरसंपदो दुर्वासनायाः शास्त्रीयया पुरुषप्रयत्नसाध्यया दैवसंपदा सद्वासनया क्षये सति जीवन्मुक्तिर्भवति ।

वासनाक्षयवन्मनोनाशस्यापि जीवन्मुक्तिहेतुत्वं श्रूयते—

" मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥
निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषो न्यायस्य विस्तरः ॥ " इति ॥

बन्धो द्विविधः, तीव्रो मृदुश्च । तत्राऽऽसुरसंपत्साक्षादेव क्लेशहेतुत्वात्तीव्रो बन्धः । द्वैतमात्रप्रतीतिस्तु स्वयमक्लेशरूपत्वादासुरसंपदुत्पादकत्वाच्च मृदुबन्धः । तत्र वासनाक्षयेण तीव्रबन्ध एव निवर्त्यते, मनोनाशेन तूभयम् । तर्हि मनोनाशेनैवालम्, वासनाक्षयस्तु निरर्थक इति चेन्न । भोगहेतुना प्रबलेन प्रारब्धेन व्युत्थापिते मनसि वासनाक्षयस्य तीव्रबन्धनिवारणार्थत्वात् । भोगस्य मृदुबन्धेनाप्युपपत्तेः । तामसवृत्तयस्तीव्रबन्धः । सात्त्विकराजसवृत्तिद्वयं मृदुबन्धः । एतच्च—

" दुःखेष्वनुद्विग्नमनाः[3] सुखेषु विगतस्पृहः । "

* घ. पुस्तके—अथेदानीमासुरी संपदुच्यते—दम्भेत्यादि—इत्यधिकम् ।

१ घ. यावद्वृत्तिग° । २ घ. च. मृद्भोगः । ३ ग. घ. च. °मना इत्यत्र ।

इत्यत्र स्पष्टीकृतम् । एवं च सति मृदुबन्धस्याभ्युपेयत्वात्तीव्रबन्धस्य वासनाक्षयेणैव निवृत्तेरनर्थको मनोनाश इति चेन्न । दुर्बलप्रारब्धापादितानवश्यंभाविभोगानां प्रतीकारार्थत्वात् । तादृग्भोगस्य प्रतीकारनिर्व(व)र्त्यत्वमभिप्रेत्येदमाहुः—

"अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥" इति ॥

तदेवं जीवन्मुक्तिं प्रति वासनाक्षयमनोनाशयोः साक्षात्साधनत्वात्प्राधान्यम् । तत्त्वज्ञानं तु तयोरुत्पादनेन व्यवहितत्वादुपसर्जनम् । तत्त्वज्ञानस्य वासनाक्षयहेतुत्वं बहुशः श्रुतौ श्रूयते—

"ज्ञात्वा देवं सर्वपाशापहानिः" *

"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥"

"तरति शोकमात्मवित्" "तत्र को मोहः कः शोक एकत्वमनु पश्यतः ।" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इति । मनोनाशहेतुत्वं च तत्त्वज्ञानस्य श्रुतिसिद्धम् । विद्यादशामभिप्रेत्येदं श्रूयते—"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं जिघ्रेत्" इत्यादि ।

गौडपादाचार्याश्चाऽऽहुः—

"आत्मतत्त्वानुबोधेन न संकल्पयते यदा ।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहः ॥" इति ॥

जीवन्मुक्तेर्वासनाक्षयमनोनाशाविव विदेहमुक्तेः साक्षात्साधनत्वाज्ज्ञानं प्रधानम् ।

"ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते" इति स्मृतेः ॥

केवलस्याऽऽत्मनो भावः कैवल्यं देहादिरहितत्वम् । तच्च ज्ञानादेव प्राप्यते । सदेहत्वस्याज्ञानकल्पितत्वेन ज्ञानैकनिवर्त्यत्वात् । ज्ञानादेवेत्येवकारेण कर्मव्यावृत्तिः । "न कर्मणा न प्रजया" इति श्रुतेः । यस्तु ज्ञानशास्त्रमनभ्यस्य यथासंभवं वासनाक्षयमनोनाशावभ्यस्य सगुणं ब्रह्मोपास्ते न तस्य कैवल्यमस्ति । लिङ्गदेहस्यानपायात् । अत एवकारेण तावपि व्यावर्त्येते । येन

* ग. घ. चेत्येतदतिरिक्तपुस्तकेषु क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः, इत्याधिकम् ।

१ ङ. °ब्धादापा° । २ घ. प्रबलभोगस्य । ३ घ 'निवृत्त्यर्थम°' । ४ घ. °नत्वम् । ५ घ. बहुधा श्रूयते श्रुतौ । ज्ञा° । ६ ग. च. आत्मसत्यानुरोधेन । घ. आत्मसत्तानुरोधेन । ७ ग. घ. भावं ।

मुच्यत इत्यस्यायमर्थः—येन ज्ञानप्रा[1]पितकेवलत्वेन कृत्स्नसंबन्धाद्विमुच्यत इति । बन्धश्चानेकविधः—अविद्याग्रन्थिः, अब्रह्मत्वम्, हृदयग्रन्थिः, [2]संशयः, [3]कर्माणि, सर्वकामत्वम्, मृत्युः, पुनर्जन्मेत्यादिशब्दैस्तत्र तत्र व्यवहारात् । अज्ञानत एते बन्धाः सर्वे[4] ज्ञाननिवर्त्याः[5] । तथा च श्रुतयः—" एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य " । " ब्रह्म वेद ब्रह्मैव भवति " ।

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " ॥

"यो वेद निहितं गुहायां परमे व्योमन् "। " सोऽश्नुते सर्वान्कामान्सह[6]"। " तमेव विदित्वाऽति मृत्युमे[7]ति " ।

" यस्तु विज्ञानवान्भवति[8] अमनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ "

" य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति " इत्यादी-[9]न्यसर्वज्ञत्वादिबन्धनिवृत्तिपराणि वाक्यान्यत्रोदाहरणीयानि । सेयं विदेहमुक्तिर्ज्ञानोत्पत्तिसमकालीना ज्ञेया । ब्रह्मण्यविद्यारोपितानामेतेषां बन्धानां विद्यया विनाशे सति पुनरुत्पत्त्यसंभवाद[10]ननुभवाच्च । तदेतद्विद्यासमकालीनत्वं भाष्यकारः समन्वयसूत्रे प्रपञ्चयामास—" तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् " इति । ननु वर्तमानदेहपातानन्तरं भाविनी विदेहमुक्तिरिति बहवो वर्णयन्ति । तथा च श्रुतिः—" तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये " इति ।

वाक्यवृत्तावप्युक्तम्—

" प्रारब्धकर्मवेगेन(ण) जीवन्मुक्तो यदा भवे[11]त् ।
कंचित्कालमथाऽऽरब्धकर्मबन्धस्य संक्षये ॥
निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥ " इति ॥

सूत्रकारोऽप्याह—" भोगेन त्वितरे क्षपयित्वा संपद्यते " इति । इतरे प्रारब्धपुण्यपापे ।

---

१ घ. °प्राप्तिके° । ङ. °प्रापितत्वेन के° । २ ग. ङ. संशयाः । ३ क. ख. ग. ङ. कर्माण्यसर्व° । घ. कर्मग्रन्थिः, कर्माणि स° । ४ ग. घ. °र्वेऽपि ज्ञा° । ५ ङ. °निर्वर्त्याः । ६ ग. घ. °सहेति। त° । ७ ग. घ. °मेतीति । ८ ङ. °ति सम° । ९ ग. °न्यप्यस° । घ. °न्यब्रह्मत्वा° । १० क. ख. ङ. °दनु° । ११ ग. °त् । किंचित्कालमनार° ।

वसिष्ठोऽप्याह—

"जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥" इति ॥

नायं दोषः, विवक्षाविशेषेण मतद्वयस्याविरोधात् । विदेहमुक्तिरि[1]त्यत्रत्ये[2]न देहशब्देन कृत्स्नं देहजातं विवक्षित्वा बहुभिर्वर्णितम् । अस्माभिस्तु भाविदेहमात्रविवक्षयोच्यते । तदनारम्भायैव ज्ञानसंपादनात् । अयं तु देहः पूर्वमेवाऽऽरब्धः, अतो ज्ञानेनापि नास्या[3]ऽऽरम्भो वारयितुं[4] शक्यते । एतद्देहनिवृत्तिरपि न ज्ञानफलम् । अज्ञानिनामप्यारब्धकर्मक्षये तन्निवृत्तेः । तर्हि वर्तमानलिङ्गदेहनिवृत्तिर्ज्ञानफलमस्तु । ज्ञानमन्तरेण तदनिवृत्तेरिति चेन्न । सत्यपि ज्ञाने जीवन्मुक्तेस्तन्निवृत्त्यभावात् । ननु ज्ञानस्य[5] किंचित्कालं प्रारब्धेन कर्मणा प्रतिबद्धत्वेनानिवर्तकत्वेऽपि प्रतिबन्धक्षये लिङ्गदेहनिवर्तकत्वं भविष्यतीति चेन्न । पञ्चपादिकाचार्येण "यतो ज्ञानमज्ञानस्यैव निवर्तकम्, इत्युपपादितत्वात् । तर्हि लि[6]ङ्गदेहनिवृत्तेः किं साधनमिति चेत्सामग्रीनिवृत्तिरिति ब्रूमः । द्विविधं हि कार्यनिवर्तकम् । विरोधिसद्भावः सामग्रीनिवृत्तिश्चे[7]ति । तद्यथा विरोधिना वायुना तैलवर्तिसामग्रीनिवृत्त्या वा दीपो निवर्तते । लिङ्गदेहस्य साक्षाद्विरोधिनं न पश्यामः । सामग्री[8] हि द्विविधा । प्रारब्धमनारब्धं चेति । ताभ्यामुभाभ्यामज्ञानिनां लिङ्गदेह इहामुत्र चावतिष्ठते । ज्ञानिनां त्वनारब्धस्य ज्ञानेन निवृत्तेः प्रारब्धस्य च भोगेन निवृत्तेः, तैलवर्तिरहितदीपवत्सामग्रीनिवृत्त्या लिङ्गदेहो निवर्तते । अतो[9] न तन्निवृत्तिर्ज्ञानफलम् । नन्वनेन न्यायेन भाविदेहानारम्भोऽपि ज्ञानफलम् । तथा हि—किमनारम्भ एव फलम्, किं वा तत्प्रतिपालनम् । नाऽऽद्यः । तस्य प्रागभावरूपत्वेनानादिसिद्धत्वात् । न द्वितीयः, अनारब्धकर्मरूपसामग्रीनिवृत्त्यैव भाविदेहारम्भप्रागभावप्रतिपालनासिद्धेः । न च तन्निवृत्तिः फलम् । अविद्यानिवृत्तेरेव विद्याफलत्वात् । नैष दोषः । भाविजन्मानारम्भादीनां विद्याफलत्वस्य प्रामाणिकत्वात्[10] । "यस्माद्भूयो न जायते" इत्याद्युदाहृताः श्रुतयस्तत्र प्रमाणम् । न च ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायेन विरोधः । अज्ञानसहभावनियतानामब्रह्मत्वादीनामज्ञानशब्देन पञ्चपादिकाचार्यैर्विवक्षितत्वात्[11] । अन्यथाऽनुभवविरोधः । अनुभूयते ह्यज्ञा-

---

१ ग. घ. च. °मुक्तित्वं । २ घ. °त्यत्रानेन । ३ घ. °नाप्यस्या° । ४ घ. °तुं न श° । ५ क. ख. छ. °स्य कंचित्कालं प्रारब्धक° । ६ घ. च. °ङ्गनि° । ७ ग. घ. ङ. °त्तिश्च । त° । ८ ग. घ. च. °ग्री द्वि° । ९ ङ. अतस्तन्नि° । १० ग. घ. च. °त्वात् । भूयो । ११ ख. ग. घ. च. °त्वाद्विरो° ।

ननिवृत्तिवद्ब्रह्मत्वादिनिवृत्तिरपि । तस्माद्भाविदेहराहित्यलक्षणा विदेहमुक्ति-र्ज्ञानसमकालीना । तथा च याज्ञवल्क्यवचनं श्रूयते—" अभयं वै जनक प्राप्तोऽसि " इति, " एतावदरे खल्वमृतत्वम् " इति च । श्रुत्यन्तरेऽपि " तमेवं विद्वानमृत इह भवति " इति । यद्युत्पन्नेऽपि तत्त्वज्ञाने तत्फलभूता विदेहमुक्तिस्तदानीं न भवेत्[1] । कालान्तरे च भवेत् । तदा ज्योतिष्टोमादाविव ज्ञानजन्यमपूर्वं किंचित्कल्प्येत । तथा च कर्मशास्त्र एव ज्ञानशास्त्रमन्तर्भवेत् । अथोच्यते । मन्त्रादिप्रतिबद्धाग्निवत्प्रारब्धप्रतिबद्धं ज्ञानं कालान्तरे विदेहमुक्तिं दास्यतीति । नैवम् । अविरोधात् । नह्यस्मदभिप्रेता भाविदेहात्यन्ताभावलक्षणा विदेहमुक्तिर्वर्तमानदेहमात्रस्थापकेन[2] प्रारब्धेन विरुध्यते, येन प्रतिबध्येत । किं च क्षणिकत्वेन कालान्तरे स्वयमविद्यमानं ज्ञानं कथं मुक्तिं दद्यात् । ज्ञानान्तरं चरम[3]साक्षात्कारलक्षणमुत्पत्स्यत इति चेन्न । साधनाभावात् । प्रतिबन्धकप्रारब्धनिवृत्त्यैव सह[4] गुरुशास्त्रदेहेन्द्रियाद्यशेषजगत्प्रभासनिवृत्तेः[5] किं ते साधनं स्यात् । तर्हि " भूयश्चान्ते विश्वमायानिवृत्तिः " इत्यस्याः श्रुतेः कोऽर्थ इति चेत् । आरब्धान्ते निमित्ताभावाद्देहेन्द्रियाद्यशेषनैमित्तिकनिवृत्ति-रित्येवार्थः । ततो भवदभिमता वर्तमानदेहराहित्यलक्षणा विदेहमुक्तिः पश्चाद[6]स्तु देहपातानन्तरम् । अस्मदभिमता तु ज्ञानसमकालीनैव । एतदेवाभिमेत्य भगवाञ्शेष आह—

" तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् ।
ज्ञानसमकाल[7]मुक्तः कैवल्यं याति हतशोकः ॥ " इति ॥

तस्माद्विदेहमुक्तौ साक्षात्साधनस्य तत्त्वज्ञानस्य प्रधानत्वमुपपन्नम् । वासनाक्षयमनोनाशयोर्ज्ञानसाधनत्वेन व्यवहितत्वादुपसर्जनत्वम् । आसुरवासनाक्षयकारिण्या दैववासनाया ज्ञानसाधनत्वं श्रुतिस्मृत्योरुपलभ्यते—"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् " इति श्रुतिः । स्मृतिरपि—

" अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥

---

१ ग. घ. च. °वेत् । अथोच्येत का° । २ ङ. °पकत्वेन । ३ क. ख. ङ. °मन्त्रह्मसा° । ४ ङ. °ह सद्गुरु° । ५ घ. °वृत्तिः किं । ६ ग. घ. च. °दस्त्वस्मद्देह° । ७ ङ. °लमेव मु° ।

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥" इति ॥

अन्यस्मिन्नहंबुद्धिरभिष्वङ्गः । ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनमित्यर्थः। मनोनाशस्यापि ज्ञानसाधनत्वं श्रुतिस्मृतिप्रसिद्धम्—"ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रुतिः । "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति च । प्रत्यगात्मसमाधिप्राप्त्या देवं ज्ञात्वेत्यर्थः ।

"यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै विद्यात्मने नमः ॥"

इति स्मृतिः ।

तदेवं तत्त्वज्ञानादीनां त्रयाणां विदेहमुक्तिजीवन्मुक्तिवशाद्गुणप्रधानभावव्यवस्था सिद्धा । ननु विविदिषासंन्यासिना संपादितानामेतेषां किं विद्वत्संन्यासादूर्ध्वमनुवृत्तिमात्रं, किं वा पुनरपि संपादनप्रयत्नोऽपेक्षितः । नाऽऽद्यः । तत्त्वज्ञानस्येवान्ययोरप्ययत्नसिद्धत्वे प्राधान्यप्रयुक्तौदराभावप्रसङ्गात्[३] । न द्वितीयः । इतरयोरिव ज्ञानस्यापि यत्नसापेक्षत्वे सत्युपसर्जनत्वप्रयुक्तौदासीन्याभावप्रसङ्गात् । नायं दोषः । ज्ञानस्यानुवृत्तिमात्रमितरयोर्यत्नसाध्यत्वमित्यङ्गीकारात् । तथाहि—विद्याधिकारी द्विविधः, कृतोपास्तिरकृतोपास्तिश्चेति । तत्रोपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा यदि ज्ञाने प्रवर्तेत तदा वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं विद्वत्संन्यासजीवन्मुक्ती स्वत एव सिध्यतः। तादृश एव शास्त्राभिमतो मुख्यो विद्याधिकारी । ततस्तं प्रति शास्त्रेषु सहोपन्यासात् , स्वरूपेण[४] विविक्तावपि विद्वत्संन्यासविविदिषासंन्यासौ संकीर्णाविव[५] प्रतिभासेते । इदानींतनास्तु प्रायेणाकृतोपास्तय एवौत्सुक्यमात्रात्सहसा विद्यायां प्रवर्तन्ते । वासनाक्षयमनोनाशौ च तात्कालिकौ संपादयन्ति । तावता श्रवणमनननिदिध्यासनानि[६] निष्पद्यन्ते । तैश्च दृढाभ्यस्तैर[७]ज्ञानसंशयविपर्ययनिरासात्तत्त्वज्ञानं सम्यगुदेति । उदितस्य ज्ञानस्य बाधकप्रमाणाभावान्निष्ट-

---

१ ग. घ. च. योगात्मने । २ ङ. °धानोपसर्जन° । ३ घ. °क्तान्तरा° । च. °क्तादन्तरा° ।
४ क. ङ. स्वस्वरूपेण । ५ ङ. °व भा° । ६ ग. घ. च. °नादीनि । ७ ङ. दृढतराभ्य° ।

त्ताया अविद्यायाः पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यम् । वासनाक्षयमनोनाशौ तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन तदा तदा बाध्यमानत्वाच्च सवातप्रदेशदीपवत्सहसा निवर्तेते । तथाच वसिष्ठः—

" पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संमतः ।
दुःसाध्यो वासनात्यागः सुमेरून्मूलनादपि ॥ " इति ॥

अर्जुनोऽपि—

" चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ " इति ॥

तस्मादिदानींतनानां विद्वत्संन्यासिनां ज्ञानस्यानुवृत्तिमात्रम् । वासनाक्षयमनोनाशौ तु प्रयत्नसंपाद्याविति स्थितम् । ननु केयं वासना यस्याः क्षयाय प्रयतितव्यमिति चेत्तत्स्वरूपमाह—वसिष्ठः—

" दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः ।
संपश्यति यदेवैतत्सद्वस्त्विवति विमुह्यति ॥
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव* ॥ " इति ॥

अत्र च स्वस्वदेशाचारकुलधर्मभाषाभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः सामान्यत उदाहरणम् । विशेषतस्तु भेदानुक्त्वा पश्चादुदाहरामः । यथोक्तां वासनामभिप्रेत्य बृहदारण्यके श्रूयते—" स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते " इति ।

वासनाभेदो वाल्मीकिना दर्शितः—

" वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥

---

* क. ख. ङ. पुस्तकेष्वत्र " प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः " ॥ इति श्लोकत्रयमधिकं दृश्यते ।

---

१ क. ख. ङ. 'चारभाषाकुलधर्मभेद' । २ घ. च. तथा क्रतुर्भवति यथाक्रतु' ।

अज्ञानसुघनाकारा घनाहंकारशालिनी ।
[1]पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥
पुनर्जन्माङ्कुरं त्यक्त्वा स्थिता संभृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ " इति ॥

देहादीनां पञ्चकोशानां तत्साक्षिणश्चिदात्मनश्च भेदावरकमज्ञानं तेन सुष्ठु घनीभूत आकारो यस्याः सेयमज्ञानसुघनाकारा। यथा क्षीरं [2]तक्रमेलनेन [3]घनी भवति, यथा वा विलीनं घृतमत्यन्तशीतलप्रदेशे चिरमवस्थापितं [4]सुघनी भवति तथा वासना द्रष्टव्या । घनीभावश्चात्र भ्रान्तिपरम्परा। तां चाऽऽसुरसंपद्विवरणे भगवानाह—

"* प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ " इति ॥

[5]अहंकारश्च तत्रैवोदाहृतः—

" इदमद्य मया लब्ध[6]मिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥

* ग. घ. चेत्येतदातिरिक्तपुस्तकेष्वेतच्छ्लोकत्रयस्थानेऽयं ग्रन्थः—"प्रवृत्तिं च निवृत्तिं च, इति षोडशाध्यायोक्तश्लोकत्रयक्रमेण पठित्वाऽग्रे पठनीयम् ।" इति ।

१ ग. घ. च. °जन्ममृत्युकरी । २ ग. घ. च. तक्रसेचनेन । ३ घ घनीभूतं । ४ क. ख. ङ. सुष्ठु घ° । ५ घ. घनाकारश्च । ६ घ. °मिदं प्रा° ।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥" इति ॥

एतेन पुनर्जन्मकारणत्वमुदाहृतं भवति, तच्च पुनः प्रपञ्चितम्—

"आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥" इति ॥

शुद्धवासना तु ज्ञातज्ञेया । ज्ञेयस्वरूपं त्रयोदशाध्याये भगवानाह—

"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते* ॥" इति ॥

अत्र तटस्थलक्षणस्वरूपलक्षणाभ्यामवगन्तुं सोपाधिकनिरुपाधिकस्वरूपद्वयमुपन्यस्तम् ।+कदाचित्संबन्धि सद्यल्लक्षयति तत्तटस्थलक्षणम् । यथा देवदत्तगृहम् । तथा कालत्रयसंबन्धि सद्यल्लक्षयति तत्स्वरूपलक्षणम् । यथा प्रकृष्टप्रकाशश्चन्द्र इति । ननु त्यक्तपूर्वापरविचारत्वं वासनालक्षणमुक्तम् । ज्ञेयज्ञानं च विचारजन्यम् । अतो न शुद्धायां तल्लक्षणमस्ति । मैवम् । लक्षणे दृढभावनये-

* घ. पुस्तकेऽत्र "ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्" इत्यर्धपद्यमधिकम् । + ग. घ. च. पुस्तकेषु कदाचिदित्यारभ्य प्रकाशश्चन्द्र इतीत्यन्तो ग्रन्थो नहि ।

१ क. ख. ङ. °न्मकरत्व° । ग. घ. °न्मकारकत्व° । २ क. ख. ङ. तच्च जन्मकरत्वं पु° । ३ घ. °लक्षणास्व° ।

त्युक्तत्वात् । यथा बहुषु जन्मसु दृढभावितत्वेनास्मिञ्जन्मनि विनैव परोपदेश-महंकार[1]ममकारकामक्रोधादयो मलिनवासना उत्पद्यन्ते तथा प्राथमिकस्य बोधस्य विचारजन्यत्वेऽपि दीर्घकालनैरन्तर्यसत्कारैर्भाविते तत्त्वे पश्चाद्वाक्ययुक्तिपरामर्शमन्तरेणैव पुरोवर्तिघटादिवत्सहसा तत्त्वं परिस्फुरति तादृश्या बोधानुवृत्त्या सहित इन्द्रियव्यवहारः शुद्धवासना । सा च देहजीवनमात्रा[2]योपयुज्यते । न तु दम्भदर्पाद्यासुरसंपदुत्पादनाय, नापि जन्मान्तरहेतुधर्माधर्मोत्पादनाय । यथा भृष्टा[3]नि व्रीह्यादिबीजानि कुसूलपूरणमात्रायोपयुक्तानि न तु रुचि[4]राम्नाय, नापि सस्यनिष्पत्तये तद्वत् । मलिना च वासना त्रिविधा । लोकवासना शास्त्रवासना देहवासना चेति । सर्वे जना यथा[5] मां न निन्दन्ति यथा वा स्तुवन्ति तथैव सर्वदा चरिष्यामीत्यभिनिवेशो लोकवासना । तस्याश्च संपादयितुमशक्यत्वान्मलिनत्वम् । तथाहि—

"को न्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान् ।"

इत्यादिना बहुधा वाल्मीकिः पप्रच्छ ।

"इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।"

इत्यादिना प्रत्युत्तरं नारदो ददौ । तादृशस्यापि रामस्य[6] पतिव्रताशिरोमणिभूताया जगन्मातुः सीतायाश्च श्रोतुमशक्यो जनापवादः संप्रवृत्तः । किमु वक्तव्यमन्येषाम् । तथा[7] देशविशेषेण परस्परं निन्दा[8]बाहुल्यमुपलभ्यते । दाक्षिणात्यैर्विप्रैरौत्त[9]रीया वे(राहैर्वे)दविदो विप्रा मांसभ[10]क्षिणो निन्द्यन्ते[11] । औत्तरैय(राहै)श्च मातुल[12]सुतोद्वाहिनो यात्रासु मृद्भाण्डवाहिनो दाक्षिणात्या निन्द्यन्ते । बह्वृचा आश्वलायनशाखां[13] कण्वशाखायाः प्रशस्तां मन्यन्ते । वाजसनेयिनस्तु वैपरीत्येन । एवं स्वस्वकुलगोत्र[14]बन्धुवर्गेष्टदेवतादिप्रशंसा परकीयनिन्दा च, आवि[15]द्वदङ्गनागोपालं सर्वत्र प्रसिद्धा । एतदेवाभिप्रेत्योक्तम्—

"+ शुचिः पिशाचो विचलो विचक्षणः क्षमोऽप्यशक्तो बलवांश्च दुष्टः ।
निश्चित्तचोरः सुभगोऽपि कामी को लोकमाराधयितुं समर्थः ॥" इति ॥

---

+ क. ख. ग. घ. च. एषु पुस्तकेषु केवलमस्य पद्यस्य "को लोकमाराधयितुं समर्थः" इति चरमचरण एव दृश्यते न साग्रश्लोकः ।

---

१ ङ. °त्कारभावि° । २ ङ. °मात्रयो° । ३ क. ख. ङ. संभ्रष्टानि° । ४ क. ख. ङ. रुचिकराम्नाय । ग. रुचिकराणि । ५ ख. ग. घ. ङ. यथा नि° । ६ क. °स्य पातिव्रत्यशि° । ख. ङ. °स्य पातिव्रत्याशि° । ७ घ. °था हि दे° । ८ क. ङ. °न्दा बहुलमु° । ख. °न्दा बहुलमुपेक्ष्यते । ९ ख. °त्तारिका वे° । ग. घ. च. °त्तरा वे° । १० ङ. °भक्षणान्निन्द्यन्ते । ११ ग. घ. °न्ते । चोत्तरैश्च । च. °न्ते । औत्तरैश्च । १२ घ. °लकन्यापरिणयया° । १३ घ. च. °शाखायाः क° । १४ घ. °त्रवर्गबन्धुत्वेषु स्वकीयेषु देव° । १५ ङ. विद्वांसमारभ्य आङ्गनागोपालम् ।

" विद्यते न खलु कश्चिदुपायः सर्वलोकपरितो[1]षकरो यः ।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥ " इति च[2]॥

अतो लोकवासनाया मलिनत्वमभिप्रेत्य योगीश्वरस्य तुल्यनिन्दास्तुतित्वं मोक्षशास्त्रेषु वर्णितम् । शास्त्रवासना त्रिविधा । पाठव्यसनं शास्त्रव्यसनमनुष्ठानव्यसनं चेति । पाठव्यसनं भरद्वाजेऽवगम्यते । स हि पुरुषायुषत्रयेण बहून्वेदानधीत्येन्द्रेण चतुर्थायुषि प्रलोभितस्तत्रापि परिशिष्टवेदाध्ययनायोद्यमं चकार । तस्यापि पाठस्याशक्यत्वान्मलिन[3]वासनात्वम् । तां चाशक्तिमिन्द्रः प्रतिबोध्य पाठान्निवर्त्य ततोऽप्यधिकाय पुरुषार्थाय सगुणब्रह्मविद्यामुपदिदेश । तदेतत्सर्वं तैत्तिरीयब्राह्मणे* द्रष्टव्यम् । तथैवाऽऽत्यन्तिकपुरुषार्थाभावाद्बहुशास्त्रव्यसनस्य मालिन्यं कावषेयगीतायामुपलभ्यते—" कश्चिन्मुनिर्दुर्वासा बहुविधशास्त्रपुस्तकभारैः सह महादेवं नमस्कर्तुमागतस्तत्सभायां नारदेन मुनिना भारवाहिगर्दभसाम्यमापादितः, कोपात्पुस्तकानि लवणार्णवे परित्यज्य महादेवेनाऽऽत्मविद्यायां प्रवर्तितः " इति । आत्मविद्या चानन्तर्मुखस्य गुरुकारुण्यरहितस्य न वेदशास्त्रमात्रेणोत्पद्यते । तथाच श्रुतिः—" नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन " इति । अन्यत्राप्युक्तम्—

" बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥ " इति ॥
" अधीत्य चतुरो वेदान्धर्मशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ॥ " इति च ॥

" नारदश्चतुःष[11]ष्टिविद्याकुशलोऽप्यनात्मवित्त्वेनानुतप्तः सनत्कुमारमुपससाद " इति च्छन्दोगा अधीयते । अनुष्ठानव्यसनं विष्णुपुराणे निदाघस्योपलभ्यते । वासि[12]ष्ठरामायणे दाशूरस्य । निदाघो हि ऋभुणा पुनः पु[13]नर्बोध्यमानोऽपि कर्मश्रद्धाजाड्यं चिरं न जहौ । दाशूरश्चात्यन्तश्रद्धाजाड्येनानुष्ठानाय

---

* ङ. पुस्तके–(ब्राह्मणम्) " भरद्वाजो ह त्रिभिरायुर्भिर्ब्र[illegible]र्यमुवास । तꣳह जीर्णिꣳ स्थविरꣳ शयानम् । इन्द्र उपव्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच । तꣳ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार । तेषाꣳ हैकैकस्मान्मुष्टिनाऽऽददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते " इति ।

---

१ ङ. °षकृतो यः । २ क. ख. ङ. च । लो° । ३ क. ख. ङ. नत्वम् । ४ ख. ग. घ. °चासक्ति° । ५ घ. °प्यधिकपु° । ६ घ. °सुपादि° । ७ ग. घ. च. °श्चिद्दुर्वासा मुनिर्बहु° । ८ ङ. सह मोक्षशास्त्रेषु वर्णितं महादेवं । ९ क. ख. ङ. °गत्य ततस° । १० घ. बहुधा । ११ ग. घ. च. °ष्टिकलाविद्या° १२ ङ. °ष्ठपुराणे दा° । १३ ग. घ. च. पुनः प्रबोध्य° ।

शुद्धप्रदेशं भूमौ न क्वाप्युपलेभे। अस्याश्च कर्मवासनायाः पुनर्जन्महेतुत्वान्मलिनत्वम्। तथा चाऽऽथर्वणिका अधीयते—

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवाभियन्ति ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः।
जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥
अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ॥
इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः।
नाकस्य पृष्ठे ते सुकृतेनानुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥" इति ॥

भगवताऽप्युक्तम्—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥
यावानर्थ उदपाने सर्वतःसंप्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥" इति ॥

दर्पहेतुत्वाच्छास्त्रवासनायां मलिनत्वम्। श्वेतकेतुरल्पेनैव कालेन सर्वान्वेदानधीत्य दर्पेण पितुरपि पुरतोऽविनयं चकारेति च्छन्दोगाः षष्ठाध्याये पठन्ति। तथा बालाकिः कानिचिदुपासनान्यवगत्य दृप्त उशीनरादिषु बहुषु देशेषु दिग्विजयेन बहूनिमानवज्ञाय काश्यामजातशत्रुं ब्रह्मविच्छिरोमणिमनुशासितुं धाष्टर्यं चकारेति कौषीतकिनो वाजसनेयिनश्चाधीयते। देहवासनाऽप्यात्मत्वगुणाधानदोषापनयनभ्रान्तिभिस्त्रिविधा। तत्राऽऽत्मत्वं भाष्यकार

१ ग. घ. °वापिय°। २ ङ. °भिनन्दान्ति। ३ ङ. °काश्चरन्ते। ४ घ. °पूर्तिं म°। ५ क. ख. ङ. °तेऽनु°। ६ ग. घ. च. °न्ति। बा°। ७ ग. °किः कांश्चिदुपा°। ङ. °किः कश्चिदुपासनां नाव°।

उदाजहार—" देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता लोकायतिकाश्च प्रतिपन्नाः " इति । " स वा एष पुरुषोऽन्नरसमयः "इत्यारभ्य " तस्मादन्नं तदुच्यते " इत्यन्तेन ग्रन्थेन तामेव प्राकृतप्रतिपत्तिं तैत्तिरीयाः स्पष्टीं कुर्वन्ति । "विरोचनः प्रजापतिनाऽनुशिष्टोऽपि स्वचित्तदोषेण देहात्मबुद्धिं दृढीकृत्यासुरान्सर्वाननुशशास " इति[3] च्छन्दोगा अष्टमाध्याये समामनन्ति । गुणाधानं द्विविधम् । लौकिकं शास्त्रीयं चेति । समीचीनशब्दादिसंपादनं लौकिकम् । कोमलध्वनिना गातुमध्येतुं वा तैलपानमरीचभक्षणादिषु लोकाः प्रयतन्ते । मृदुस्पर्शाय लोकाः पुष्टिकरावौषधाहारावुपयुञ्जते । लावण्यायाभ्यङ्गोद्वर्तनदुकूलालंकारानुपसेवन्ते । सौगन्ध्याय स्रगालेपने धारयन्ति । शास्त्रीयं गुणमाधातुं गङ्गास्नानशालिग्रामतीर्थादिकं संपादयन्ति । दोषापनयनं च चिकित्सकोक्तैरौषधैर्मुखादिप्रक्षालनेन च लौकिकं, शौचाचमनाभ्यां वैदिकमित्युभयविधम् । अस्याश्च देहवासनाया मालिन्यं वक्ष्यते । देहस्याऽऽत्मत्वं तावदप्रामाणिकत्वादशेषदुःखहेतुत्वाच्च मलिनत्वम् । अस्मिश्चार्थे पूर्वाचार्यैः सर्वैरपि पराक्रान्तम् । गुणाधानं च प्रायेण न पश्यामः । प्रसिद्धा एव गायका अध्यापकाश्च प्रयतमाना अपि बहवो ध्वनिसौष्ठवं न लभन्ते । मृदुस्पर्शोऽङ्गपुष्टिश्च न नियता । लावण्यसौगन्ध्ये अपि दुकूलस्रगादिनिष्ठे न तु देहनिष्ठे । अत एव विष्णुपुराणेऽभिहितम्—

" मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते ॥ " इति ॥

शास्त्रीयं च गुणाधानं प्रबलेन शास्त्रान्तरेणापोद्यते । "न हिंस्यात्सर्वभूतानि" इत्यस्य " अग्नीषोमीयं पशुमालभेत " इत्यनेनापवादस्तद्वत्प्रबलं शास्त्रमेतत्—

"यस्याऽऽत्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ।
यस्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः* ॥

---

* क. पुस्तकेऽत्र त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन्कुणपे शरीर आत्मबुद्धिः, स्वधीः कलत्रादिषु स्वीया इति बुद्धिः, भौमे भूमिविकारे इज्यधीर्देवताबुद्धिः, यस्य तीर्थमिति बुद्धिः सलिले न, अभिज्ञेषु तत्त्ववित्सु यस्य ( इत्य ) ता बुद्धयो न सन्ति स एव गोष्वपि खरो दारुणः । यथा गवां तृणादिभारवाहः । खरो गर्दभः ,इत्यधिकमुपलभ्यते ।

---

१ ग. प्रागुक्ता जना लो° । घ. च. प्राकृता जना लो° । २ घ. °कृतां प्र° । ३ ग. घ. च. °ति च्छान्दो° । ४ ग. घ. च. °णादिना लो° ।५ ग. घ. च °युज्येते । ६ क. °नादिभ्यां । ग. घ. ङ. °नादिना वै° । ७ ग. घ. च. °न् । वैरा° । ८ क. ख. ङ. °त्यस्याग्निष्टोमी° । ९ ङ. °त्। यः स्वात्म° ।

 

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥" इत्यादि ॥

यद्यप्यनेन शास्त्रेण दोषापनयनं प्रतिषिध्यते न तु गुणाधानं तथाऽपि सति विरोधिनि प्रबलदोषे गुण आधातुमशक्य इत्यर्थाद्गुणाधानस्य प्रतिषेधः। अत्यन्तमालिन्यं चात्र मैत्रायणीशाखायां श्रूयते—"भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकादूषिते विण्मूत्रवातपित्तसंघाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः" इति। शरीरमिदं मैथुनादेवोद्भूतं संविद्यपेतं निरय इव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवबद्धं विण्मूत्रकफपित्तमज्जामेदोवसाभिरन्यैश्चाऽऽमयैर्बहुभिः परिपूर्णं कोश इव वसुनेति च चिकित्सया च रोगशान्तिर्न नियता। शान्तोऽपि रोगः कदाचित्पुनरुदेति। नवच्छिद्रैर्निरन्तरं स्रवत्सु मलेषु रोमकूपैरसंख्यातैः स्विन्ने गात्रे को नाम स्वेदेन प्रक्षालयितुं शक्नुयात्। तदुक्तं पूर्वाचार्यैः—

"नवच्छिद्रकृ(यु)ता देहाः स्रवन्ति घटिका इव।
बाह्यशौचैर्न शुध्यन्ति नान्तः शौचं तु विद्यते ॥"

अतो देहवासना मलिना। तदेतन्मालिन्यमभिप्रेत्य वसिष्ठ आह—

"आपादमस्तकमहं मातापितृविनिर्मितः।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ॥
सा कालसूत्रपदवी सा महावीचिवागुरा।
साऽसिपत्रवनश्रेणी या देहोऽहमिति स्थितिः ॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते।
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी ॥" इति ॥

तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभासमानमपि विविदिषोर्वेदनोत्पत्तिविरोधित्वाद्विदुषो ज्ञानप्रतिष्ठाविरोधित्वाच्च विवेकिभिर्हेयम्।

अत एव स्मर्यते—

"लोकवासनया जन्तोः शास्त्रवासनयाऽपि च।
देहवासनया ज्ञानं यथावन्नैव जायते ॥" इति ॥

या तु दम्भदर्पाद्यासुरसंपद्रूपा मानसवासना तस्या नरकहेतुत्वान्मालिन्यमतिप्रसिद्धम्। अतः केनाप्युपायेन वासनाचतुष्टयस्य क्षयः संपादनीयः। यथा

१ ग. घ. च. °सान्यैश्च मलैर्ब°। २ घ. °च्छिद्रयुतादेहात्स्रव°। ३ घ. °न्ति चान्तःशौचं न विद्यते। ४ घ. च. देहेऽह°। ५ घ. पुक्कसी। ६ ङ. °किभिर्ध्येयम्। ७ ङ. दम्भाद्यासुर°।

वासनाक्षयः संपादनीयस्तथा मनसोऽपि। न च तार्किकवन्नित्यद्रव्यमणुपरिमाणं मनो वैदिका अभ्युपगच्छन्ति । येन मनोनाशो दुःसंपादनीयः स्यात्[1] । किं तर्हि सावयवमनित्यं सर्वदा जतुसुवर्णादिवद्बहुविधपरिणामार्हं द्रव्यं मनः । तस्य लक्षणं प्रमाणं च वाजसनेयिनः समामनन्ति—“ कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ” इत्येतलक्षणम्[2] । कामादिवृत्तयः क्रमेणोत्पद्यमानाश्चाक्षुषप्रत्यक्षघटादिवत्साक्षिप्रत्यक्षेणातिस्पष्टं[3] भासन्ते तद्वृत्त्युपादानं[4] मन इत्यर्थः । “ अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम् ” इति “मनसा ह्येव पश्यति मनसा शृणोति” इत्यादि प्रमाणम्[5] । चक्षुःसंनिकृष्टः स्फीतालोकमध्यवर्ती[6] घटः श्रोत्रसंनिकृष्ट उच्चैः पठितवेदश्च यस्यानवधाने सति न प्रतीयते, अवधाने तु प्रतीयते । तादृशं सर्वविषयोपलब्धिसाधारणकारणमन्वयव्यतिरेकाभ्यां[7] प्रतीयत इत्यर्थः । तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानातीत्येतदुदाहरणम् । यस्माल्लक्षणप्रमाणाभ्यां सिद्धं मनस्तस्मात्तदेवमुदाहरणीयम् । पृष्ठभागेऽप्यन्येनोपस्पृष्टो देवदत्तो विशेषेण जानाति हस्तस्पर्शोऽयमङ्गुलिस्पर्शोऽयमिति । न हि तत्र चक्षुः प्रसरति, त्वगिन्द्रियं तु मार्दवकाठिण्य(न्य)मात्रोपक्षीणम् । तस्मान्मन एव विशेषज्ञानकारणं परिशिष्यते । तच्च मननान्मन इति[8] चिन्तनाच्चित्तमिति चाभिधीयते । तच्च चित्तं सत्त्वरजस्तमोगुणात्मकं प्रकाशप्रवृत्तिमोहानां सत्त्वादिकार्याणां तत्र दर्शनात् । प्रकाशादीनां च गुणकार्यत्वं गुणातीतलक्षणेऽवगम्यते—

“ प्रकाशं च प्रवृत्तिं[9] च मोहमेव च पाण्डव ”

इत्यभिधानात् । सांख्यशास्त्रेऽपि—प्रकाशप्रवृत्तिमोहा नियमार्था इत्युक्तम्[10] । प्रकाशो नाम नात्र सितभास्वरं रूपं किं तु ज्ञानम् ।

“ सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ ”

इत्युक्तत्वात् ।

ज्ञानवत्सुखमपि सत्त्वकार्यम् । तदप्युक्तम्—

“ सत्त्वं सुखे संजयति रजः कर्माणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ” इति ॥

---

१ ग. घ. 'पाद्यः स्यात् । २ क. ख. एवेतिलक्ष° । ३ घ. °क्षुषाप्र° । ४ घ. तदुपादानं । च. सदुपानं ।५ घ. च. ह्येव पश्यति मनसा शृणोतीत्येतत्प्रमाणम् । ६ घ. °तामवलो° । ७ घ. °ण्यग्रहणे उप° । ८ घ. च. °ति चेतना' । ९ ग. घ. च. °त्तिनि° । १० घ. °म् । न प्रकाशो नामात्र सि° ।

समुद्रतरङ्गवन्निरन्तरं परिणममानेषु गुणेषु कदाचित्कश्चिदुद्भवति । इतराव-भिभूयेते । तदुक्तम्—

" रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ " इति ॥

" बाध्यबाधकतां यान्ति कल्लोला इव सागरे । " इति च ।

तत्र तमस उद्भवे सत्यासुरसंपदुदेति । रजस उद्भवे सति लोका-दिवासनास्तिस्रो भवन्ति । सत्त्वस्योद्भवे सति दैवी संपदुपजायते । एतदेवा-भिप्रेत्योक्तम्—

" सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ " इति ॥

यद्यप्यन्तःकरणं त्रिगुणात्मकं भासते तथाऽपि सत्त्वमेवास्य[1] मनसो मुख्यमु-पादाने[2]कारण[3]म् । उपादानसहकारिभूता अवयवा उपष्टम्भकाः । रजस्तमसी तु तदुपष्टम्भके । अत एव ज्ञानिनो योगाभ्यासेन रजस्तमसोरपनीतयोः सत्त्व-मेव स्वरूपं परिशिष्यते । एतदेवाभिप्रेत्योक्तम्—

" ज्ञस्य चित्तमचित्तं स्याज्ज्ञचित्तं सत्त्वमुच्यते । " इति ।

तच्च सत्त्वं चाञ्चल्यहेतुरजोगुणशून्यत्वादेकाग्रम् । भ्रान्तिकल्पितानात्मस्व-रूपस्थूलपदार्थाकारहेतुतमोगुणशून्यत्वात्सूक्ष्मम् । तत आत्मदर्शनयोग्यम् । अत एव श्रुतिः—

" दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । " इति ।

न खलु वायुना दोधूयमानेन प्रदीपेन मणिमुक्तादिलक्षणानि निर्धारयितुं शक्यन्ते । नापि स्थूलेन खनित्रेण सूच्येव सूक्ष्मपटस्यूतिः संभवति । तदी[4]-दृशं सत्त्वमेव[5] योगिषु तमोगुणसहितेन रजोगुणेनोपष्टब्धं बहुविधद्वैतसंकल्पेन चेतयमानं[6] चित्तं भवति । तच्चित्तं तमोगुणाधिक्ये सत्यासुरीं संपदमु[7]पचिन्व-त्पीनं भवति । तथाऽऽह वसिष्ठः—

" अनात्मन्यात्मभावेन देहभावनया तथा ।
पुत्रदारैः कुटुम्बैश्च चेतो गच्छति पीनताम् ॥

१ ग. घ. च. °स्य मु° । २ ग. च. °नम् । रज° । ३ घ. °णम् । रज° । ४ ख. ग. घ. च. तदेतदीदृशं । ५ ख. घ. °मेवायोगिषु तमोगुणगर्भितेन र° । ६ क. ख. चेतमानं । ७ घ. °मुपाधित्वात्पीनं ।

अहंकारविकारेण ममतामललीलया ।
इदं ममेति[1]भावेन चेतो गच्छति पीनताम् ॥
आधिव्याधिविलासेन समाश्वासेन संस्तौ[2] ।
हेया[3]देयविभागेन चेतो गच्छति पीनताम् ॥
स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ॥
*दुराशाक्षीरपानेन भोगानिलबलेन च ।
आस्थादानेन चारेण[4] चित्ताहिर्याति पीनताम् ॥ " इति ॥

+आस्था नाम प्रपञ्चे सत्यत्वबुद्धिस्तस्या आदानमङ्गीकारः स एव चारो गमनागमक्रिया तयेति । तदेवं विनाशनीययोर्वासनामनसोः स्वरूपं निरूपितम् ।

अथ वासनाक्षयमनोनाशौ क्रमेण निरूप्येते, तत्र वासनाक्षयप्रकारमाह वसिष्ठः—

" बन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिभावनानाम्नीर्गृहाणामलवासनाः ॥
ता अप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तः शा[5]न्ततमस्नेहो भव चिन्मात्रवास[6]नः ॥
ता[7]मप्यन्तः परित्यज्य मनोबुद्धिसमन्वि[8]ताम् ।
शेषे स्थिरसमा[9]धानो येन त्यजसि तं त्यज ॥ " इति ॥

अत्र मानसवासनाशब्देन पूर्वोक्तास्तिस्रो लोकशास्त्रदेहवासना विवक्षिताः । विषयवासनाशब्देन दम्भदर्पाद्यासुरसंपद्विवक्षिता । मृदुतीव्रत्वे तद्विवक्षाभेदकारणे । यद्वा शब्दस्पर्शरूपरस[10]गन्धा विषयास्तेषां काम्यमानत्वदशाजन्यसंस्कारो मानसवासना । भुज्यमा[11]नत्वदशाजन्यः संस्कारो विषयवासना । अस्मिन्पक्षे

---

* ग. पुस्तकेऽयं श्लोको नहि । + ग. घ. च. पुस्तकेषु आस्थेत्यारभ्य तयेतीत्यन्तो ग्रन्थो न दृश्यते ।

---

१ घ. °भागेन । २ ङ. संश्रुतौ । ३ घ. 'यादेय° । ४ घ. 'ण चेतोहि° । ५ क. °शान्तरतमस्ने' । ङ. 'शान्तः समस्ने । ६ क. ख. ङ. 'सनाः । ता । ७ घ. ता अप्य° । ८ ग. घ. 'न्वितः । शे' । च. 'न्वितम् । शे' । ९ ग. घ च 'मासीनो । १० क. ख. ङ. 'गन्धवि' । ११ क. ख. 'नदशा' ।

पूर्वोक्तानां चतसृणामन[1]योरन्तर्भावः । अन्तर्बाह्यव्यतिरेकेण वासनान्तरासंभवात् । ननु वासनापरित्यागः कथं घटते । नहि तासां मूर्तिरस्ति[2] । येन संमार्जनीसमूहितधूलितृणवद्धस्तेनोद्धृत्य बहिस्त्यक्ष्यामः । मैवम् । उपवासजागरणवत्तदुपपत्तेः । स्वभावप्राप्तयोर्भुजिक्रियानिद्रयोरमूर्तत्वेऽपि तत्परित्यागरूपे उपवासजागरणे सर्वैरप्यनुष्ठीयेते तद्वदत्राप्यस्तु । "अद्य स्थित्वा नि[3]राहारै[4]ः" इत्यादिमन्त्रेण संकल्पं कृत्वा सावधा[5]नत्वेनावस्थानं तत्र त्याग इति चेदत्रापि न तद्दण्डनिवारितम् । [6]प्रैषमात्रेण संकल्प्याप्रमत्तत्वेनावस्थातुं शक्यत्वात् । वैदिकमन्त्रानधिकारिणां तु भाषया संकल्पोऽस्तु । यदि तत्र शाकसूपौदनादिसंनिधित्यागस्तर्ह्यत्रापि स्रक्चन्दनवनितासंनिधिपरित्यागोऽस्तु । अथ तत्र बुभुक्षानिद्रालस्य[7]ादिविस्मारकैः पुराणश्रवणदेवपूजानृत्यगीतवादित्रादिभिश्चित्तमुपलालयेत तर्ह्यत्रापि मैत्र्यादिभिस्तदुपलालयेत् । मैत्र्यादयश्च पतञ्जलिना सूत्रिताः—"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःख[8]पुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" इति । चित्तं हि रागद्वेषपुण्यपापैः कलुषी क्रियते । रागद्वेषौ च पतञ्[9]जलिः सूत्रयामास—"सुखानुशयी रागः, दुःखानुशयी द्वेषः" इति । स्नेहा[10]त्स्वेनानुभूयमानं सुखमनुशेते क[11]श्चिद्धीवृत्तिविशेषः सु[12]खजातं सर्वं मे भूयादिति । तच्च दृष्टादृष्टं सामग्र्यभावान्न संपादयितुं शक्यम् । अतः स रागश्चित्तं कलुषी करोति । यदा सु[13]खिप्राणिष्वयं मैत्रीं भावयेत्सर्वेऽप्येते सुखिनो मदीया इति, तदा तत्सुखं स्वकीयमेव संपन्नमिति भावयतस्तत्र रागो निवर्तते । यथा स्वस्य राज्याभावेऽपि पुत्रादिराज्यमेव स्वकीयं राज्यं तद्वत् । निवृत्ते च रागे वर्षास्वतीतासु श[14]रत्सरिदिव चित्तं प्रसीदति । तथा दुःखमनुशेते काश्चित्प्रत्ययः, ईदृशं [15]दुःखं सर्वदा मे मा भूदिति । त[16]च्च शत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्वे दुःखहेतवो हन्तुं शक्यन्ते । त[17]तः स द्वेषः सदा हृदयं दहति । यदा स्वस्येव परेषां सर्वेषां प्रतिकूलं दुःखं[18] न भूयादित्यनेन

---

१ ग. घ. च. °योरेवान्त° । २ ङ. °स्ति । चेद्येन । ३ घ. निराहारम्" इति मन्त्रेण । ४ क. ख. °रः श्वो भोक्ष्ये परमेश्वर । इ° । ५ ग. घ. °धानेनैवावस्थानं गत इति । च. °धानेनैवावस्थानं गत इतिवदत्रापि न तद्दण्डवारितः । ६ घ. प्रैषमन्त्रेण संकल्प्य प्रसवत्वेनावस्थातुं । ख. ग. घ. प्रैषमन्त्रेण । ७ ग. घ. च °स्यादिनिवर्तकैः । ८ घ. °पुण्यपापवि° । ९ ग. घ. °ञ्जलिरसूत्रयत् । सु° । १० ग. घ. च. °हादनु° । ११ ग. घ. च. काश्चिद्वृत्तिविशेषः सुखजातीयं मे सर्वं । १२ ग. सुखं सजातीयं स° । १३ ग. घ. च. सुखिष्वयं । १४ ग. च. शरत्सु सरिदिव । १५ घ. च. सर्वदुःखं । १६ ग. घ. च. तथाच । १७ ग. घ च. अतः । १८ ग. घ °खं मा भूदित्य° ।

प्रकारेण करुणां दुःखिप्राणिषु भावयेत्तदा वैर्यादि[1]द्वेषनिवृत्तौ चित्तं प्रसीदति । अत एव स्मर्यते—

"प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वीत[2] मानवः ॥ " इति ॥

तत्प्रकारं च महान्तो दर्शयन्ति—

"सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् ॥ " इति ॥

तथाहि प्राणिनः स्वभावत एव पुण्यं नानुतिष्ठन्ति, पापं त्वनुतिष्ठन्ति । तदाहुः—

"पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः[3] ।
न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ॥ " इति ॥

ते च पुण्यपापे[4] पश्चात्तापं जनयतः । स च तापः श्रुत्याऽनूद्यते—" किमहं साधु नाकरवम्, किमहं पापमकरवम् " इति । यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत्तदा तद्वासनायाः[5] स्वयमेवाप्रमत्तः पुण्येषु प्रवर्तते(र्तेत) । तथा पापिषूपेक्षां भावयन्स्वयमपि पापान्निवर्तेत । अतः पश्चात्तापस्याभावेन चित्तं प्रसीदति । सुखिषु मैत्रीं भावयतो न केवलं रागनिवृत्तिः किं त्वसूयेर्ष्यादयोऽपि निवर्तन्ते । परगुणानामसहनमीर्ष्या, गुणेषु दोषाविष्करणमसूया । यदा मैत्रीवशात्परकीयं सुखं स्वकीयमेव संपद्यते तदा परगुणेषु कथमसूयादिकं संभवेत् । एवं दोषान्तरनिवृत्तिरपि यथायोग्यम्[6]उन्नेया । दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यथा[7] निवर्तते तथा दुःखित्वप्रतियोगिकस्वसुखित्वप्रयुक्तो दर्पोऽपि निवर्तते । स च दर्प आसुरसंपद्य[8]हंकारप्रस्तावे पूर्वमुदाहृतः—

" ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी[9] ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥ " इति ॥

ननु पुण्यात्मसु मुदितां भावयतः पुण्यप्रवृत्तिः फलत्वेनोक्ता सा च योगिनो न युक्ता । मलिनायां शास्त्रवासनायां पुण्यमन्तर्भाव्य पूर्वमुदाहृतत्वात् । मैवम् । पुनर्जन्मकरस्य काम्येष्टापूर्तादेस्तत्र मलिनत्वेनोदाहरणात् । इह तु

१ ग. °दिदोषनि° । क. ख. ङ. °दिषु द्वे° । २ घ. कुर्वन्ति । ङ. कुर्वन्तु । ३ घ. साधवः । ङ. मानवः । ४ ङ. °पे अक्रियमाणे क्रियमाणे च प° । ५ ग. च. °सनावान्स्वय° । क. ख. ङ. °सनया स्व° । ६ ग. च. °ग्यमनुमेया । ७ घ. यदा निवर्तते तदा दुः° । ८ ग. घ. च. °पदहं° । ९ ग. घ. च. °खीत्यादि । ननु ।

योगाभ्यासजन्यमशुक्लकृष्णत्वेन जन्मानापादकं पुण्य(ण्यं)कर्म विवक्षितम्। अशुक्लकृष्णत्वं पतञ्जलिः सूत्रयामास—"कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषाम्" इति। काम्यं कर्म विहितत्वाच्छुक्लं, निषिद्धं कृष्णं, मिश्रं शुक्लकृष्णम्। तदेतत्त्रयमितरेषामयोगिनां संपद्यते। तच्च त्रिविधं जन्म प्रयच्छति। तदाहुर्विश्वरूपाचार्याः—

"शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः॥" इति॥

ननु योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमिति चेन्मैवम्। अकाम्यत्वाभिप्रायेणाशुक्लत्वाभिधानात्। अतः शुक्लकृष्णे पुण्ये प्रवृत्तिर्योगिनोपेक्षिता[1]। नन्वनेन न्यायेन योगिनोऽपि यथोचितं पुण्यात्मसु मुदितां भावयित्वा पुण्येष्वेव प्रवर्तेरन्निति चेत्प्रवर्ततां(न्तां) नाम। ये मैत्र्यादिभिश्चित्तं प्रसादयन्ति तेषामेव योगित्वात्। मैत्र्यादिचतुष्टयमुपलक्षणम्। तेन "अभयं सत्त्वसंशुद्धिः" इत्यादिदैवी संपत् "अमानित्वमदम्भित्वम्" इत्यादिना ज्ञानसाधनानि जीवन्मुक्तस्थितप्रज्ञादिवचनोक्तधर्माश्चोपलक्ष्यन्ते[3]। सर्वेषामेतेषां शुभाशुभवासनारूपत्वेन[4] मलिनवासनानिवर्तकत्वात्। ननु सन्त्यनन्ताः[5] शुभवासनाः, न चैकेन ताः सर्वा अभ्यसितुं शक्यन्ते। निरर्थकश्च तदभ्यासप्रयास इति चेन्न। तन्निवर्त्यानामनन्तानां मलिनवासनानामेकस्य[6] नरस्यासंभवात्। नह्यायुर्वेदोक्तानि सर्वाण्यौषधान्येकेन सेवितुं शक्यन्ते। नापि तन्निवर्त्याः सर्वे रोगा एकस्य देहे संभवन्ति। एवं तर्हि स्वचित्तं प्रथमतः परीक्ष्य तत्र यदा यावत्यो मलिनवासनास्तदा तावतीर्विरोधिनीः[7] शुभवासना अभ्यसेत्। यथा पुत्रमित्रकलत्रादिभिः[8] पीड्यमानस्ततो विरक्तस्तन्निवर्तकं पारिव्राज्यं गृह्णाति, तथा विद्यामदधनमदकुलाचारमदादिमलिनवासनाभिः पीड्यमानस्तद्विरोधिनं विवेकमभ्यसेत्। स च विवेको जनकेन दर्शितः—

"अद्य ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः।
हन्त चित्तमहत्तायाः कैषा विश्वस्तता तव॥
क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा।

---

१ घ. च. °पेक्ष्यन्ते। न°। २ ग. नन्वयोगिनोऽप्यनेन न्यायेन। घ. च. ननु योगिनोऽप्ययं°। ३ घ. °नोक्ता धर्मा°। ४ ग. घ. शुभ°। ५ ग. घ. च. °न्त्यनेकाः शुभाः। न च ता एकेन सर्वा अभ्य°। ६ क. ख. ग. च. कस्य मनस्या(स्य)सं°। ७ ग. घ. च. तावतीः शुभवासनाविरोधिनीरभ्यसेत्। ८ घ. पुत्रकलत्र°।

प्रोक्तनानि प्रयातानि केयं विश्वस्तता तव ॥
कोटयो ब्रह्मणो(णां) याता गताः सर्गपरम्पराः ।
प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीविते ॥
येषां निमेषणोन्मेषौ जगतां प्रलयोदयौ ।
तादृशाः पुरुषा नष्टा मादृशां गणनैव का ॥ " इति ॥

नन्वयमपि विवेकस्तत्त्वज्ञानोदयात्प्राचीनः, नित्यानित्यवस्तुविवेकादिसाधनव्यतिरेकेण ब्रह्मज्ञानासंभवात् । इह तूत्पन्नब्रह्मसाक्षात्कारस्य जीवन्मुक्तये वासनाक्षयादिसाधनं वक्तुमुपक्रान्तम् । अतः किमिदमकाण्डे ताण्डवमिति चेत् । नायं दोषः । साधनचतुष्टयसंपन्नस्य पश्चाद्ब्रह्मज्ञानमित्येष सर्वपुरुषसाधारणक्षुण्णः प्रौढो राजमार्गः । जनकस्य तु पुण्यपुञ्जपरिपाकेनाऽऽ(णाऽऽ)काशफलपातवदकस्मात्सिद्धगीताश्रवणमात्रेण तत्त्वज्ञानमुत्पन्नम् । ततश्चित्तविश्रान्तये विवेकोऽयं क्रियत इति काण्ड एवेदमुचितं ताण्डवम् । नन्वेवमप्यस्य विवेकस्य ज्ञानसमनन्तरभावित्वेन मलिनवासनानुवृत्त्यभावाच्छुद्धवासनाभ्यासो नापेक्षित इति चेन्न । जनकस्य तदनुवृत्त्यभावेऽपि याज्ञवल्क्यभगीरथादेस्तदनुवृत्तिदर्शनात् । अस्ति हि याज्ञवल्क्यस्य तत्प्रतिवादिनामुषस्तकहोलादीनां च भूयान्विद्यामदः । तैः सर्वैरपि विजिगीषुकथायां प्रवृत्तत्वात् । ननु तेषां विद्यान्तरमेवास्ति न तु ब्रह्मविद्येति चेन्न । कथागतयोः प्रश्नोत्तरयोर्ब्रह्मविषयत्वात् । ननु ब्रह्मविषयत्वेऽपि तेषामापातज्ञानमेव न तु सम्यग्वेदनमिति चेन्न । तथा सत्यस्माकमपि तदीयवाक्यैरुत्पन्नाया विद्याया असम्यक्त्वप्रसङ्गात् । ननु सम्यक्त्वेऽपि परोक्षज्ञानमेवेति चेन्न । यत्साक्षादपरोक्षाद्वये(द्ब्रह्मे)ति मुख्यापरोक्षविषयतयैव विशेषतः प्रश्नोपलम्भात् । नन्वात्मज्ञानिनो विद्यामद आचार्यैर्नाभ्युपगम्यते ।

तथा चोपदेशसाहस्र्यामुक्तम्—

" ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः । " इति ।

नैष्कर्म्यसिद्धावपि—

" न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥ " इति ॥

नायं दोषः । जीवन्मुक्तिपर्यन्तस्य तत्त्वज्ञानस्य तत्र विवक्षितत्वात् । न

---

१ ग. घ. च. प्राक्तनानि । २ ग. घ. च. जगतः । ३ घ. च. पुरुषाः सन्ति मा° । ४ ग. घ. °रणः प्रौ° । ५ घ. विविक्षयत° । ६ ग. घ. °शसहस्र्यामभिहितम् । ७ क. ख. विदुषोऽप्यासुरत्वतः । ङ. विदुषो ह्यासुर° । ८ ग. घ. च. इति चेन्नायं ।

खलु वयमपि जीवन्मुक्तानां विद्यामदमभ्युपगच्छामः। ननु विजिगीषोरात्मबोध एव नास्ति।

" रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु।
[1]कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥ "

इत्याचार्यैरनभ्युपगमादिति चेन्न।

" रागादयः सन्तु कामं न तद्भावोऽ[2]पराध्यति।
*उत्खातदंष्ट्रोरगवदविद्या किं करिष्यति " ॥

इत्यत्र तैरेव रागाद्यभ्युपगमात्। न चात्र परस्परव्याहतिः। स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्थापनीयत्वात्। ननु ज्ञानिनो रागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मान्तरप्रसङ्ग इति चेन्मैवम्। अदग्धबीजव[3]दविद्यापूर्वकाणामेव मुख्यरागादित्वेन पुनर्जन्महेतुत्वात्। ज्ञानिनस्तु दग्धबीजवदाभासा एव रागादयः। एतदेवाभिप्रेत्योक्तम्—

" उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना।
तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ॥ " इति ॥

तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न। तत्काले मुख्यव[4]देवाऽऽभासानां बाधकत्वात्। रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते तद्वत्। नन्वाभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेच्चिरं जीवतु भवान्। इयमेव ह्यस्मदभिमता जीवन्मुक्तिः। याज्ञवल्क्यस्तु विजिगीषुदशायां [5]न हीदृशः। चित्तविश्रान्तये विद्वत्संन्यासस्य तेन करिष्यमाणत्वात्। न केवलमस्य विजिगीषा किंतु धनतृष्णाऽपि महती जाता। यतो बहूनां ब्रह्मविदां पुरतः स्थापितं सालंकारगोसहस्रमपहृत्य स्वयमेवेदमाह—"नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्मः " इति। इतरा[6]न्ब्रह्मविदोऽवज्ञातुमियं काचिद्वचोभङ्गीति चेत्। अयमपि तर्ह्यपरो दोषः। इतरे च ब्रह्मविदः स्वकीयं धनमनेनापहृतमिति मत्वा चुक्रुधुः। [7]अयं च क्रोधपरवशः शाकल्यं शापेन मारयामास। न चास्य ब्रह्म[8]घ्नस्य मोक्षाभावः शङ्कनीयः। यतः कौषीतकिनः समामनन्ति—"नास्य केनापि(न च)कर्मणा लोको ही(मी)यते न मातृवधेन न पितृवधेन न स्तेयेन[न] भ्रूणहत्यया " इति। शेषोऽपि स्वकृतायामार्यापञ्चाशि(श्वश)त्यामिदमाह—

* क. ख. ङ. पुस्तकेष्विदमुत्तरं श्लोकार्धं नहि।

१ ग. कुतः शान्तिलता तस्य। २ ग. घ. च. °पराध्यते। उ°। ३ घ. 'दविद्यापूर्वककारणमेव। च. °दविद्यापूर्वकमेव। ४ ग. घ. च. °देव भासमानानां। ५ क. ख. ङ. न तादृशः। अतश्चित्तविश्रा°। ६ झ. 'रानब्रह्म'। ७ ग. घ. च. स्वयं। ८ ग. घ. च. 'ह्मघ्नो मो°।

" हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥ " इति ॥

तस्मात्किं बहुना ब्रह्मविदां याज्ञवल्क्यादीनामस्त्येव मलिनवासनानुवृत्तिः, भगीरथश्च तत्त्वं विदित्वाऽपि राज्यं पालयन्मलिनवासनाभिश्चित्तविश्रान्त्यभावे सति सर्वं परित्यज्य पश्चाद्विश्रान्तवानिति वसिष्ठेनोपाख्यायते । अतः स्वकीयं वर्तमानं मलिनवासनाविशेषं परकीयदोषवत्सम्यगुत्प्रेक्ष्य तत्प्रतीकारमभ्यसेत् । अनेनैवाभिप्रायेण स्मर्यते—

" यथा सुनिपुणः सम्यक्परदोषेक्षणे रतः ।
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥ " इति ॥

नन्वादौ तावद्विद्यामदस्य कः प्रतीकार इति चेत् । किं स्व[2]निष्ठस्य मदस्य परविषयस्य, किंवा स्वविषयस्य परनिष्ठस्य । आद्ये भङ्गोऽवश्यं क्वचिद्भविष्यतीति निरन्तरं भावयेत् । तद्यथा श्वेतकेतुर्विद्यया मत्तः प्र[3]वाहणस्य राज्ञः सभां गत्वा तेन पञ्चाग्निविद्यायां[4] पृष्टायां स्वयमजानानो निरुत्तरो राज्ञा [5]बहुधा भर्त्सितः पितुः समीपमागत्य स्वनिर्वेदमुदाजहार । पिता तु[6] निर्मदस्तमेव राजानमनुसृत्य तां विद्यां लेभे । दृप्तबालाकिश्चाजातशत्रुणा राज्ञा भर्त्सितो दर्पं संत्यज्य राजानमुपससाद । उपस्तकहोलादयश्च मदेन कथां कृत्वा पराजिताः । यदा स्वविषयः परनिष्ठो मदः प्र[7]वर्तेत तदा मत्तः स परो मां निन्दतु, अवमन्यतां वा । सर्वथाऽपि न मे हानिरिति भावयेत् । अ[8]त एवाऽऽहुः—

"आत्मानं यदि निन्दन्ति स्वात्मानं स्वयमेव हि ।
शरीरं यदि निन्दन्ति सहायास्ते [9]जना मम ॥
निन्दावमानावत्यन्तं भूषणं यस्य योगिनः ।
धीविक्षेपः कथं तस्य वाचाटैः क्रियतामिह ॥ " इति ॥

+ निष्कर्म(नैष्कर्म्य)सिद्धौ—

"सपरिकरे वर्चस्के दोषतश्चावधारिते ।
यादि दोषं वदेत्तस्मै किं तत्रोच्चरितुर्भवेत् ॥
तद्वत्स्थूले तथा सूक्ष्मे देहे त्यक्ते विवेकतः ।
यादि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवेत् ॥

+ क. ख. पुस्तकयोर्निष्कर्मेत्यारभ्य श्लोक त्रयं नहि ।

१ ग. घ. ङ. °नादोषं । २ ग. घ. च. स्वनिष्ठमदस्य किंवा । ३ घ. प्रवाहणराज्ञः । ४ घ. च. °विद्यायां पृष्टोऽपि स्वय° । ५ ग. घ. च. बहुविधं । ६ क. ख. ङ. तु तन्निर्मदस्तमेव राजानमुपसंपद्य तां । ७ क. ख. ङ. प्रवर्तते । ८ घ. च. तथाहि–। ९ क. ख. ङ. ते । १० ग. घ. च. जना ममेत्युक्तत्वादत आहुः—नि° ।

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नाऽऽत्मनः ॥ " [ इति । ]

निन्दाया भूषणत्वं च ज्ञानाङ्कुशे दर्शितम्—

" मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नजनितोऽयमनुग्रहो मे ।
श्रेयोर्थिनो हि पुरुषाः परतुष्टिहेतो-
र्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥
सततसुलभदैन्ये निःसुखे जीवलोके
यदि मम परिवादात्प्रीतिमाप्नोति कश्चित् ।
परिवदतु यथेष्टं मत्समक्षं तिरो वा
जगति हि बहुदुःखे दुर्लभः प्रीतियोगः ॥ " इति ॥

अवमानस्य भूषणत्वं स्मर्यते—

" तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथाऽवमन्येरन्गच्छेयुर्नैव संगतिम् ॥ " इति ॥

याज्ञवल्क्योपस्तादीनां यौ स्वनिष्ठपरनिष्ठौ विद्यामदौ तयोर्यथा विवेकेन प्रतीकारस्तथा धनाभिलाषक्रोधयोरप्यवगन्तव्यः ।

" अर्थानामर्जने क्लेशस्तथैव परिपालने ।
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः ॥ "

इति धनविषयो विवेकः ॥

क्रोधोऽपि द्विविधः—स्वनिष्ठः परविषयः, परनिष्ठः स्वविषयश्चेति । तत्र स्वनिष्ठं प्रत्येवमुक्तम्—

" अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥
फलान्वितो धर्मयशोर्थनाशनः स चेदपार्थः स्वशरीरतापनः ।
न चेह नामुत्र हिताय यः सतां मनांसि कोपः समुपाश्रयेत्कथम् ॥ " इति ॥

स्वविषयं प्रत्येवमीरितम्—

" न मेऽपराधः किमकारणे नृणां मदभ्यसूयेत्यपि नैव चिन्तयेत् ।
न यत्कृता प्राग्भवबन्धनिःसृतिस्ततोऽपराधः परमो नु चिन्त्यताम् ॥

१ घ. च. 'त्नसुलभोऽय' । २ घ. च. संगतमिति । ३ घ. 'षये वि' । ४ ग. घ. 'णि चेत्कोपः कोपे । ५ ङ. 'रनाशनः । ६ ग. घ. च. 'सि रोषः स समाश्र' । ७ ङ. 'कारिणां नृणां ।

नमोऽस्तु कोपदेवाय स्वाश्रयज्वालिने भृशम् ।
कोप्यस्य मम वैराग्यदायिने दोषबोधिने ॥" इति ॥

धनाभिलाषक्रोधवद्योषित्पुत्राभिलाषावपि विवेकेन निवर्तनीयौ । तत्र योषिद्विवेको वसिष्ठेन दर्शितः—

"मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः[1] किमिव शोभनम् ॥
त्वङ्मांसरक्तबाष्पाम्बु[2] पृथक्कृत्वा विलोचने ।
समालोकय रम्यं चेत्किं मुधा परिमुह्यसि[3] ॥
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्स्तने मुक्ता[4] हारस्योल्लासशालिता ॥
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरान् ॥
ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥
जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ॥
सर्वेषां दोषरत्नानां सुसमुद्गी(द्गि)कयाऽनया[5] ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥
इतो मांसमितो रक्तमितोऽस्थीनीति वासरैः ।
ब्रह्मन्कतिपयैरेव याति स्त्री[6] विषचारुताम् ॥
यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥"[इति।]

पुत्रविवेको[7] ब्रह्मानन्दे दर्शितः—

"अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।

---

१ क. ख. ग. ङ. च. स्त्रियः । २ क. ख. ङ. °रक्तवाप्यम्बु । ३ घ. परिमुह्यते । ४ घ. च. °क्ता हारस्योरसि शालिता । श्म° । ५ ख. घ. सुसमुद्रिकयाऽनया । ६ घ. च. स्त्री विशरारुताम् । ७ ङ. पुत्रविषयविवेको ।

लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ॥
जातस्य[१] ग्रहरोगादिः कुमारस्य च मूर्खता ।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥
यूनश्च परदारादिर्दारिद्र्यं च कुटुम्बिनः ।
पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ " इति ॥

यथा विद्याधनक्रोधयोषित्पुत्रविषयाणां मलिनवासनानां विवेकेन प्रतीकारस्तथाऽन्यासामपि यथायोगं शास्त्रैः स्वयुक्त्या दोषं विविच्य प्रतीकारं कुर्यात्। कृते च प्रतीकारे जीवन्मुक्तिलक्षणं परमं पदं लभ्यते । तदाह वसिष्ठः—

" वासना[२]संपरित्यागे यदि यत्नं करोष्यलम्[३] ।
तास्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥
पौरुषेण प्रयत्नेन बलात्संत्यज्य [४]वासनाः ।
स्थितिं बध्नासि चेत्तर्हि पदमासादयस्यलम् ॥ " इति ॥

नन्वत्र पौरुषः प्रयत्नो नाम पूर्वोक्तो विषयदोषविवेकः । स च पुनः पुनः क्रियमाणोऽपि प्रबलेन्द्रियैर्व्यापारेणाभिभूयते । तदुक्तं भगवता—

" यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ "

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भ[६]सि ॥ " इति ॥

एवं तर्ह्युत्पन्नविवेकरक्षार्थमिन्द्रियाणि निरोद्धव्यानि । तदपि तत्रैवोत्तरश्लोकाभ्यां दर्शितम्—

" तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ " इति ॥

स्मृत्यन्तरेऽपि—

" न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैवमिति शिष्टस्य लक्षणम् ॥ " इति ॥

---

१ ग. घ. च. °ते त्ववि° । २ ग. घ. च. °नानां प° । ३ ग. °म् । ततः शि° । घ. च. °म् । तत्ते शि° । ४ क. ख. ङ. वासनाम् । ५ ग. घ. च. °यव्यवहारे° । ६ ङ. °सि इति चेन्न । ए° ।

एतदेवान्यत्र संग्रहविवरणाभ्यां स्पष्टीकृतम्—

" अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥
अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः ॥
भिक्षार्थमटनं[1] यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ॥
तिष्ठतो व्रजतो वाऽपि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां[2] भुवं त्यक्त्वा[3] परिव्राट् सोऽन्ध उच्यते ॥
हितं मितं मनोरामं वचः शोकापहं च यत् ।
श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ॥
सांनिध्ये विषयाणां च समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं भिक्षुर्मुग्धः स उच्यते ॥
न निन्दां न स्तुतिं कुर्यान्न किं(कं)चिन्मर्मणि स्पृशेत् ।
नातिवादी भवेत्तद्वत्सर्वत्रैव समो भवेत् ॥
न संभाषेत्स्त्रियं कांचित्पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥ " इति ॥

यथा कश्चिद्व्रती नक्तैकभुक्तोपवासमौनादिव्रतं संकल्प्य सावधानो भ्रंशमकृत्वा सम्यक्पालयति, तथैवाजिह्वत्वादिव्रते स्थितः सावधानो विवेकं पालयेत् । तदेवं विवेकेन्द्रियनिरोधाभ्यां दीर्घकालनैरन्तर्यसत्कारसेविताभ्यां मैत्र्यादिभावनासु प्रतिष्ठितास्वासुरसंपद्रूपा मलिनवासनाः क्षीयन्ते । ततो निःश्वासोच्छ्वासवन्निमेषोन्मेषवच्च पुरुषप्रयत्नमन्तरेण प्रवर्तमानाभिर्मैत्र्यादिवासनाभिर्लोके व्यवहरन्नपि तदीयसाकल्यवैकल्यानुसंधानं चित्ते परित्यज्य निद्रातन्द्रामनोराज्यादिरूपाः समस्तचेष्टाः प्रयत्नेन शान्ताः कृत्वा चिन्मात्रवासनामभ्यसेत् । स्वतस्तावदिदं जगच्चिज्जडोभयात्मकं भासते । यद्यपि शब्दस्पर्शादिजडवस्तुभासनायैवेन्द्रियाणि सृष्टानि " पराञ्चि खानि व्यतृणत्स्वयंभूः " इति श्रुतेः, तथाऽपि चैतन्यस्योपादानतया वर्जयितुमशक्यत्वा-

---

१ ग. घ. च. °क्षार्थं गमनं । २ ङ. चतुर्युगाद्भुवं मुक्त्वा । ३ ग. भुक्त्वा ।

चैतन्यपूर्वकमेव जडं[1] भासते । “ तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ” इति श्रुतेः । तथा सति पश्चाद्भासमानस्य प्रथमतो भासमानमेव चैतन्यं वास्तवं रूपमिति निश्चित्य जडमुपेक्ष्य चिन्मात्रं चित्ते वासयेत् ।

एतच्च बलिशुक्रयोः प्रश्नोत्तराभ्यां विस्पष्टम[2]वगम्यते—

“ [3]किमिहास्तीह किंमात्रमिदं किंमयमेव च ।
कस्त्वं कोऽहं क एते वा लोका इति वदाऽऽशु मे ॥
चिदिहास्[4]तीह चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः ॥ ” इति ॥

यथा सुवर्णका[5]रः कटकं विक्रीणन्नपि वलयाकारस्य गुणदोषानुपेक्ष्य गुरुत्ववर्णयोरेव मनः प्रणिधित्सति तथा चिन्मात्रे मनः प्रणिधातव्यम् । यावता कालेन जडं सर्वथैवोपेक्ष्य चिन्मात्रे मनसः प्रवृत्तिर्नि[6]ःश्वासादिवत्स्वाभाविकी संपद्यते तावन्तं कालं चिन्मात्रवासनायां प्रयतेत । नन्वादावेव चिन्मात्रवासनाऽस्तु, तयैव मलिनवासनानिवृत्[7]तेः । किमनेनान्तर्गडुना मैत्र्याद्यभ्यासेनेति चेन्न । चिद्वासनाया अप्रतिष्ठितत्वप्रसङ्गात् । [8]यथा कुट्टिमदार्ढ्यव्यतिरेकेण क्रियमाणमपि स्तम्भकुड्यात्मकं गृहं [9]न प्रतितिष्ठति । यथा वा विरेचनेन प्रबलदोषमनिःसार्य सेवितमप्यौषधं नाऽऽरोग्यकरं तद्वत् । ननु “तामप्यथ परित्[10]यजेत् ” इति चिन्मात्रवासनाया अपि [11]परित्याज्यत्वमवगम्यते । तदयुक्तम् । चिन्मात्रं परित्यज्यान्यस्य कस्यचिदुपादेयस्याभावात् । नायं दोषः । द्विविधा चिन्मात्रवासना—मनोबुद्धिसमन्विता तद्रहिता चेति । करणं मनः, कर्तृत्वोपाधिर्बुद्धिः । तथा च सत्यप्रमत्तोऽहमेकाग्रेण मनसा चिन्मा[12]त्रं भावयिष्यामीति, एतादृशेन कर्तृकरणानुसंधानेन समन्विता प्राथमिकी या चिन्मात्रवासना ध्यानशब्दाभिधेया तां परित्यजेत् । या त्वभ्यासपाटवेन कर्तृत्वाद्यनुसंधानात्रधानरहिता समाधिशब्दाभिधेया तामुपाददीत । ध्यानसमाध्योस्तु लक्षणं पतञ्जलिः सूत्रयामास—“ तत्र प्रत्ययैकतानता ध्यानम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ” इति । तादृशे समाधौ दीर्घकालनैरन्[13]तर्यसत्कारैः सेविते स्थैर्यं लब्ध्वा पश्चात्कर्तृकरणानुसंधानपरित्यागार्थो

१ घ. जगद्भासते । २ ङ. विस्फुटमव॰ । ३ ङ. किमिहास्ति कियन्मात्र॰ । ४ ख. ग. ङ. ॰स्तीति चि॰ । ५ क. ख. ग. घ. ॰कामः क॰ । ६ ॰र्निःश्वासव॰ । ७ घ. ॰वृत्तिः कि॰ । ८ ग. तथा । ९ ख. ग. घ. न तिष्ठति । १० ग. घ. च. ॰त्यजेति चि॰ । ङ. ॰त्यज्येति चि॰ । ११ घ. परित्यागोऽवगम्यते । १२ ङ. ॰त्रं भविष्या॰ । १३ ङ. ॰र्यसंस्कारैः ।

यः प्रयत्नस्तमपि परित्यजेत् । नन्वेवं सति तत्त्यागयत्नोऽपि परित्याज्य इत्यनवस्था स्यात् । मैवम् । कतकरजोन्यायेन स्वपरनिवर्तकत्वात् । यथा कलुषिते जले प्रक्षिप्तं कतकरज इतररजसा सह स्वात्मानमपि निवर्तयति तथा त्यागार्थः प्रयत्नः कर्तृकरणानुसंधानं निवर्तयन्स्वात्मानमपि निवर्तयिष्यति । निवृत्ते च तस्मिन्[1]मलिनवासनावच्छुद्धवासनानामपि क्षीणत्वान्निर्वासनं मनोऽवतिष्ठते । एतदेवाभिप्रेत्य वसिष्ठ आह—

"तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
राम निर्वासनीभावमाहराऽऽशु विवेकतः ॥
सम्यगालोचनात्सत्याद्वासना प्रविलीयते ।
वासनाविलये चेतः शममायाति दीपवत् ॥" इति ॥

"यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥" इति च ॥

"सुषु[2]प्तिवत्प्रशमितभाववृत्तिना स्थि[3]तं सदा जाग्रति येन चेतसा ।
कलान्वितो विधुरिव यः सदा बुधैर्निषेव्यते मुक्त इतीह[4] स स्मृतः ॥" इति च ॥

"हृदयात्संपरित्यज्य सर्वमेव महामतिः[5] ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥" इति च ॥

न च निर्वासनमनस्कस्य जीवनहेतुर्व्यवहारो लुप्येतेति शङ्कनीयम् । किं चक्षुरादिव्यवहारस्य लोपः, किं वा मानसव्यवहारस्य[6] । तत्राऽऽद्यमुद्दालको निराचष्टे—

"वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ॥" इति ॥

द्वितीयं वसिष्ठो निराचष्टे—

"अयत्नोपनतेष्वक्षिदिग्द्रव्येषु यथा पुनः ।

---

१ ङ. °न्मलिनवासनानां शुभवासनातत्त्ववासनानामपि । २ ग. घ. च. °षुप्तव° । ३ ङ. स्थितः । ४ ग. घ. च. °ह संमतः । ५ घ. महामते । ६ ग. घ. च. °स्य लोपः । त° ।

नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ " इति ॥

ता[1]दृश्या धिया प्रा[2]रब्धभोगं स एवोपपादयति—

" परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितश्चौरो मैत्रीमेति न चौरताम् ॥
अशङ्कितोपसंप्राप्ता ग्रामयात्रा यथाऽध्वगैः ।
प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥ " इति ॥

भोगकालेऽपि सवासनेभ्यो निर्वासनस्य विशेषमाहुः[3]—

" नाऽऽपदि ग्लानिमायाति हेमपद्मं यथा निशि ।
नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥
नित्यमापूर्णतामन्तरक्षुब्धामिन्दुसुन्दरीम् ।
आपद्यपि न मुञ्चन्ति शशिनः शीततामिव ॥
अब्धिवद्धृतमर्यादा भवन्ति वि[4]गताशयाः ।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ " इति ॥

जनकस्यापि समाधिव्युत्थितस्येदृशमेवाऽऽचरणं पठ्यते—

" तूष्णीमथ चिरं स्थित्वा जनको जनजीवितम् ।
व्युत्थितश्चिन्तयामास मनसा शमशालिना ॥
किमुपादेयमस्तीह यत्नात्संसाधयामि किम् ।
स्व[5]तः स्थितस्य शुद्धस्य चि[6]तः का मेऽस्ति कल्पना ॥
नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् ।
स्वस्थ आत्मनि तिष्ठामि यन्ममास्ति तदस्तु मे ॥
इति संचिन्त्य जनको यथाप्राप्तक्रियामसौ ।
असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ॥
भविष्यन्नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
वर्तमाननिमेषं तुं[7] हसन्नेवानुवर्तते ॥ " इति ॥

तदेवं यथोक्तेन वासनाक्षयेण यथोक्ता जीवन्मुक्ति[8]र्भवतीति सुस्थितम् ॥

इति श्रीमद्विद्यारण्यप्रणीतजीवन्मुक्तिविवेके वासनाक्षयनिरूपणं
नाम द्वितीयं प्रकरणम् ॥ २ ॥

---

१ घ. तादृश्याऽपि धिया अस्तु भोगः । स । २ क. ख. प्रारब्धोपभोगं । ३ ग. °ह—न परिग्ला° । ४ क. ख. विशदाशयाः । ग. घ. विततशयाः । च. नियताशयाः । ५ ग. घ. च. स्वतः स्थितविशु° । ६ ख. चित्ते का मेऽ° । ७ ग. °तु सहसैवा° । ८ ग. घ. च. °क्तिर्भविष्यतीति स्थि° ।

# अथ तृतीयं मनोनाशप्रकरणम् ।

अथ जीवन्मुक्तिसाधनं मनोनाशं निरूपयामः । यद्यप्यशेषवासनाक्षये सति अर्थान्मनो नश्यत्येव तथाऽपि स्वातन्त्र्येण मनोनाशे सम्यगभ्यस्ते सति वासनाक्षयो रक्षितो भवति । न चाजिह्वत्वषण्डकत्वाद्यभ्यासेनैव तद्रक्षा सिद्धेति वाच्यम् । नष्टे मनस्यजिह्वत्वादीनामर्थसिद्धत्वेनाभ्यासप्रयासाभावात् । ननु मनोनाशाभ्यासस्तत्राप्यस्तीति चेदस्तु नाम। तस्याऽऽवश्यकत्वादन्तरेण मनोनाशमभ्यस्ता अप्यजिह्वत्वादयोऽस्थिरा भवन्ति । अत एव मनसो नाशनीयत्वं जनक आह—

" सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिति स्थितम् ॥
संकल्पमेव तन्मन्ये मनोमूलमिति स्थितम् ।
संकल्पमेव तन्मन्ये संकल्पोपशमेन तत् ॥
शोषयामि यथा शोषमेति संसारपादपः ।
प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चौरो मयाऽऽत्मनः ॥
मनो नाम निहन्म्येनं मनसाऽस्मि चिरं हतः ॥ " इति ॥

वसिष्ठोऽप्याह—

" अस्य संसारवृक्षस्य सर्वोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ॥
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ॥
तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥
एतावति धरणितले सुभगास्ते साधुचेतनाः पुरुषाः।
पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन ॥

१ घ. °तसः पु° ।

हृदयबिले कृतकुण्डल उल्बणकलनाविषो मनोभुजगः ।
यस्योपशान्तिमगमच्चन्द्रवदुदितं तमव्ययं वन्दे ॥ " इति ॥
चित्तं नाभिः किलास्येदं मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ॥ " इति ॥

गौडपादाचार्यैरप्युक्तम्—

" मनसो निग्र[1]हायत्तमभयं सर्वयोगिना(णा)म् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ " इ[2]ति ॥

अर्जुनेनोक्तम्—

" चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥

इत्येतद्वचनं हठयोगविषयम् । अत एव वसिष्ठ आह—

" उपविश्योपविश्[3]यैकचित्ते[4]केन मुहुर्मुहुः ।
न शक्यते मनो जेतुं विना[5] युक्तिमनिन्दिताम् ॥
अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः ।
विजेतुं शक्यते नैव तथा युक्त्या विना मनः ॥
मनोविलयहेतूनां युक्तीनां सम्यगीरणम् ।
वसिष्ठेन कृतं तावत्तन्निष्ठस्य वशे मनः ॥
ह[6]ठतो युक्तितश्चापि द्विविधो निग्रहो मतः ।
निग्रहो धी[7]क्रियाक्षाणां, हठो गोलकनिग्रहात् ॥
कदाचिज्जायते कश्चिन्मनस्तेन विलीयते ।
अध्यात्मविद्याधिगमः साधुसंगम एव च ॥
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥
सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ।
चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ॥
विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ।
ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥ " इति ॥

निग्रहो द्विविधः—हठनिग्रहः, क्रमनिग्रहश्चेति । तत्र चक्षुःश्रोत्रादिज्ञाने-

१ क. ख. °ग्रहो यत्तदभयं । घ. च. °ग्रहायातमभयं । २ क. ख. घ. °ति । यत्त्वर्जु° ।
३ घ. °श्यैव क्वचित्केन मु° । ४ ग. °त्तज्ञेन । ५ ङ. °ना योगमनिन्दिताम् । ६ ङ. गृह्णतो ।
७ ग. घ. च. धीविक्रियाणां ।

न्द्रियाणि वाक्पाण्यादिकर्मेन्द्रियाणि च तत्तद्गोलकोपरोधमात्रेण हठान्निगृह्यन्ते । तद्दृष्टान्तेन मनोऽपि तथा निग्रहीष्यामीति मूढस्य भ्रान्तिर्भवति । न तु तन्निगृह्यते । तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वात् । अतः क्रमनिग्रह एव योग्यः । क्रमनिग्रहे चाध्यात्मविद्याप्राप्त्यादय उपायाः । सा च विद्या दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वं च बोधयति । तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावं, प्रयोजनवति दृग्वस्तुन्यगोचरत्वं च बुद्ध्वा निरिन्धनाग्निवत्स्वयमेवोपशाम्यति । तथा च श्रूयते—

" यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ " [ इति । ]

योनिरात्मा, यस्तु बोधितमपि तत्त्वं न सम्यग्बुध्यते, यश्च विस्मरति तयोरुभयोः साधुसंगम एवोपायः । साधवो हि पुनः पुनर्बोधयन्ति स्मारयन्ति च । यस्तु विद्यामदादिदुर्वासनया पीड्यमानो न साधूननुवर्तितुमुत्सहते तस्य पूर्वोक्तविवेकेन वासनापरित्याग उपायः । वासनानामतिप्राबल्येन त्यक्तुमशक्यत्वे प्राणस्पदनिरोधनमुपायः । प्राणस्पन्दनवासनयोश्चित्तप्रेरकत्वात्तयोर्निरोधे चित्तशान्तिरुपपद्यते । प्रेरकत्वं च वसिष्ठ आह—

" द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना ॥
सती सर्वगता संवित्प्राणस्पन्देन बोध्यते ।
संवेदनादनन्तानि ततो दुःखानि चेतसः ॥ " इति ॥

यथा भस्मच्छन्नमग्निं लोहकारा दृतिभ्यां धमन्ति, तत्र च दृत्युत्पन्नवायुना सोऽग्निर्ज्वलति, तथा चित्तोपादानेन काष्ठस्थानीयेनाज्ञानेनाऽऽवृता संवित्प्राणस्पन्देन बोध्यमाना चित्तवृत्तिरूपेण प्रज्वलति । तस्माच्चित्तवृत्तिनामकात्संविज्ज्वालारूपात्संवेदनाद्दुःखान्युत्पद्यन्ते । सेयं प्राणस्पन्देन प्रेरिता चित्तोत्पत्तिः । अन्यां च स एवाऽऽह—

" भावसंवित्प्रकटितामनुभूतां च राघव ।
चित्तस्योत्पत्तिमपरां वासनाजनितां शृणु ॥
दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ " इति ॥

१ क. ख. घ. निगृही° । २ क. ख. तु तथा त° । घ. तु तन्निगृहीतुं शक्यते । ३ ङ. क्रमनिग्रहाय । ४ ङ. दृग्वस्तुसत्यत्वं स्व° । ५ ङ. स्वयमेवोप° । ६ ङ. दृढभावना । ७ ग. °त्तिनामकाचि:सं° । घ. च. °त्तिनामकात्संवेदना° ।

न केवलं प्राणवासनयोश्चित्तप्रेरकत्वं किं तु परस्परप्रेरकत्वमप्यस्ति । तदाह वसिष्ठः—

" वासनावशतः प्राणस्पन्दस्तेन च वासना ।
क्रियते[1] चित्त[2]बीजस्य तेन बीजाङ्कुरक्रमः[3] ॥ " इति ॥

अत एवान्यतरनाशेनोभयनाशमप्याह—

" द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ " इति ॥

तयोर्नाशोपायं नाशफलं चाऽऽह—

" प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आ[4]सनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥
असङ्गव्यवहारित्वाद्भवभावनवर्जनात् ।
शरीरनाशवर्तित्वाद्वासना न प्रवर्तते ॥
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥
एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥
यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥
अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ " इति ॥

अमनस्तानुदये शान्त्यभावमाह—

" चित्तयक्षदृढाक्रान्तं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं गुरवो न च मानवाः ॥ " इति ॥

आसनाशनयोगेनेति यदुक्तं तत्राऽऽसनस्य लक्षणमुपायं फलं च त्रिभिः सूत्रैः पतञ्जलिः सूत्रयामास[6]—"स्थिरसुखमासनम्"। "प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्।" "ततो द्वंद्वा[7]नभिघातः" इति। पद्मकस्वस्तिकादिना यादृशेन देहस्थापनरूपेण यस्य पुरुषस्यावयवव्यथानुत्पत्तिलक्षणं सुखं, देहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते तस्य तदेव मुख्यमासनम् । तस्य च प्रयत्नशैथिल्यं लौकिक

१ ग. घ. च. जायते । २ घ. चित्तवृक्षस्य । ३ ग. °क्रमात् । इ° । ४ ङ. आशाना° । ५ क. ख. ग. घ. च. °नवमिति । ६ ङ. °स—सुस्थि° । ७ ग. च. द्वंद्वैर्नाभिघात इति ।

उपाय[1]ः। गमनगृहकृत्यतीर्थयात्रास्नानयागहोमादिविषयो[2] यः प्रयत्नो मानस उत्साहस्तस्य शैथिल्यं कर्तव्यम्। अन्यथा स उत्साहो बलादेह[3]मुत्थाप्य यत्र क्वापि प्रेरयति[4]। अलौकिकोपायश्च फणासहस्रेण धरणीं धारयित्वा स्थैर्येणा[5]वतिष्ठते योऽयमनन्तः स[6] एवाहमस्मीति ध्यानं चित्तस्यानन्ते[7] समापत्तिः। तथा यथोक्तासनसंपादकमदृष्टं निष्पद्यते। सिद्धे चाऽऽसने शीतोष्णसुखदुः[8]खमानापमाना[9]दिद्वंद्वैर्यथापूर्वं नाभिहन्यते। तथाविधस्य चाऽऽसनस्य योग्यो देशः श्रूयते—

"विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः॥" इति॥

"समे शुचौ शर्करवह्निवालुका[10]विवर्जिते शब्दजलाशयादिभिः॥
मनोनुकूले नतु चक्षु[11]पीडने गुहानिवाताश्रयणे प्रयोजयेत्॥" इति च॥

सोऽयमासनयोगः।

अशनयोगस्तु मिताहारत्वम्,

"अत्याहारमनाहारं नित्यं योगी विवर्जयेत्।" इति श्रुतेः॥

भगवताऽप्युक्तम्—

"नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥" इति॥

जितासनस्य प्राणायामेन मनोविनाशः[12] श्वेताश्वतरैराम्नायते—

"त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य।
ब्रह्मोडुपेन प्रतरेत विद्वान्स्रोतांसि सर्वाणि भयावहानि॥
प्राणा[13]न्प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोः श्वसीत।
दुष्टाश्वयुक्तमिव[14] वाहमेनं[15] विद्वान्मनो धारयेताप्रमत्तः॥" [इति।]

योगी द्विविधः, विद्यामदाद्यासुरी(र)संपद्रहितस्तत्सहितश्चेति। तयोराद्यस्य ब्रह्मध्यानेन मनसि निरुद्धे सति तन्नान्तरीयकतया प्राणो निरुध्यते। तं प्रति

---

१ ग. घ. च. °पायः। अलौकिकोपायश्च गृह°। २ घ. °षयेभ्यो यः। ३ ङ. °हस्थमु°। ४ ग. घ. च. °ति। फ°। ५ क. ख. ग. घ. च. °वस्थितो योऽ°। ६ ग. घ. च. स एवास्मीति। ७ क. ख. °नन्तसमापत्तिः। ङ. °नन्ते समापयति। त°। ८ ङ. °दुःखावमानादि°। ९ क. ख. °नावमानादि°। १० ङ. °कादिभिर्विवर्जिते। ११ च. चक्षुःपीडके। १२ ग. घ. च. मनोनाशः। १३ च. °णान्संपी°। १४ ङ. °मिह वा°। १५ ग. घ. वाहनमेनं।

त्रिरुन्नतमिति मन्त्रः पठितः । द्वितीयस्याभ्यासेन प्राणे निरुद्धे तन्नान्तरीयकतया मनो निरुध्यते । तं प्रति प्राणान्प्रपीड्येति मन्त्रः प्रवृत्तः । प्राणपीडनप्रकारो वक्ष्यते । तेन च पीडनेन युक्तचेष्टो भवति । मनश्चेष्टा विद्यामदादयो निरुध्यन्ते । प्राणनिरोधेन चित्तदोषनिरोधे दृष्टान्तोऽन्यत्र श्रूयते—

" यथा पर्वतधातूनां दह्यन्ते[1] दहनान्मलाः ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥ " इति ॥

अत्रोपपत्तिर्वसिष्ठेन दर्शिता—

" यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि ।
प्राणस्पन्दक्षये यत्नः कर्तव्यो धीमतोच्चकैः ॥ " इति ॥

मनोवाक्चक्षुरादीन्द्रियदेवताः स्वस्वव्यापारं निरन्तरं करिष्याम इति व्रतं धृत्वा श्रमरूपेण मृत्युना ग्रस्ताः । स च मृत्युः प्राणं नो[2]ऽऽप्नोत् । ततो निरन्तरमुच्छ्वासनिःश्वासौ कुर्वन्नपि[3] प्राणो न श्राम्यति । तदा[4] विचार्य देवताः प्राणरूपं प्राविशन् । सोऽयमर्थो वाजसनेयिभिराम्नायते—" अयं वै नः श्रेष्ठो यः संचरंश्चासंचरंश्च न व्यथते[5] यो न रिष्यति हंतास्यैव सर्वे रूपमसामेति[6] । एतस्यैव सर्वे रूपमभवंस्तस्मादेत[7] एतेनाऽऽख्यायन्ते प्राणाः " इति । अत इन्द्रियाणां प्राणरूपत्वं नाम प्राणाधीनचेष्टावत्त्वम् । तच्चा[8]न्तर्यामिब्राह्मणे सूत्रात्मप्रस्तावे श्रूयते—" वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति । तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रं[9]सिषतास्याङ्गानीति । वायुना हि गौतम सूत्रेण संदृब्धानि भवन्ति" इति । अतः प्राण[10]मनस्पन्दनयोः सहभावित्वात्प्राणनिग्रहे मनो निगृह्यते । ननु सह स्पन्दो न युक्तः, सुषुप्तौ चेष्टमानेऽपि प्राणे मनसोऽचेष्टमानत्वात् । न । विलीनत्वेन तदानीं मनस एवाभावात् । ननु क्षीणे प्राणे नासिकयोः श्वसीतेति व्याहतम् । नहि क्षीणप्राणस्य मृतस्य श्वासं क्वचित्पश्यामः । नापि श्वसतो जीवतः प्राणक्षयोऽस्ति । मैवम् । अनुल्बणत्वस्य क्षयत्वेनात्र विवक्षितत्वात् । यथा खननच्छेदनादिषु व्याप्रियमाणस्य पर्वतमारोहतः शीघ्रं धावतो वा श्वासवेगो यावान्भवति, न तावांस्त्व[11]वस्थितस्याऽऽसीनस्य वा विद्यते । तथा प्राणायामपाटवोपेतस्य तस्याल्पः श्वासो भवति । एतदेवाभिप्रेत्य श्रूयते—

---

१ क. ख. °न्ते धमिता मलाः । ग. °न्ते धमनान्मलाः । घ. च. °न्ते धमतां मलाः । २ घ. च. नाऽऽप्नोति ततो । ३ क. ख. घ. कुर्वन्नप्ययं प्राणो न श्राम्यति । ४ तदवि° । ५ ग. च. °ते अथो न रिष्यति । घ. °ते अथो न मरिष्यति । ६ ग. घ. च. रूपं भवामेति । ७ ग. °स्मादनेनाऽऽ° । घ. °स्मादत एतेनाऽऽ° । ८ घ. च. तथाऽन्त° । ९ ग. °स्रसीयतास्या° । १० क. ख ङ. °मनःस्यन्दयोः । ११ क. ख. °तावानव° । ग. घ. च. तावान्स्थि° ।

" भूत्वा तत्राऽऽयतप्राणः शनैरेव समुच्छ्वसेत् । " इति ।

यथा दुष्टैरश्वैरुपेतो रथो मार्गं त्यक्त्वा यत्र क्वापि नीयते स च सारथिना दृढमश्वं [1]रज्जुष्वाकृष्य मार्गेषु पुनर्धार्यते तथेन्द्रियैर्वासनादिभिरितस्ततो नीयमानं [2]मनः प्राणरज्जौ दृढं [3]धारितायां धार्यते ।

प्राणान्प्रपीड्येति यदुक्तं तत्र प्राणपीडनप्रकारोऽन्यत्र श्रूयते—

" सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ।
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ॥
शून्यभावेन [4]युञ्जीयाद्रेचकस्येति लक्षणम् ।
वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ॥
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ।
नोच्छ्वसेन्न च निःश्वासे(श्व)न्नैव गात्राणि चालयेत् ॥
एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥ " इति ॥

अत्र शरीरान्तर्गतं वायुं बहिर्निः[6]सारयितुमुत्क्षिप्य शरीरमाकाशं शून्यं निरात्मकं वायुरहितं कृत्वा स्वल्पमपि वायुमप्रवेश्य शून्यभावेनैव नियमयेत् । तदिदं रेचकं भवति । कुम्भको द्विविधः, आन्तरो बाह्यश्चेति । तदुभयं वसिष्ठ आह—

" अपानेऽस्तं गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्याऽनुभूयते ॥
बहिरस्तं गते प्राणे यावन्नापान [7]उद्गतः ।
[8]तावत्पूर्णा समावस्था बहिष्ठं कुम्भकं विदुः ॥ " इति ॥

तत्रोच्छ्वास आन्तरकुम्भकविरोधी, निःश्वासो बाह्यकुम्भकविरोधी, गात्रचालनमुभयविरोधि । तस्मिन्सति निःश्वासोच्छ्वासयोरन्यतरस्यावश्यंभावि[9]त्वात् । पतञ्जलिरप्यासनानन्तरभाविनं प्राणायामं सूत्रयामास—"तस्मिन्सति [10]निःश्वासोच्छ्वासयोर्गतिविच्छेदः प्राणायामः"।[इति।]ननु कुम्भके गत्यभावेऽपि

१ ग. रज्जुष्वाकृष्य सुखमार्गेषु निर्धार्यते । घ. च. रज्जुष्वाकृष्टासु स्वमार्गेषु । २ ग. घ. च. चित्तं । ३ घ. धृतायां । ४ ग. घ. च. युञ्जीत रेच° । ५ ग. घ. °च्छसेन्नैव निः° । ६ ग. घ. च. °सार्योत्क्षि° । ७ क. ख. ग. उद्भवः । ८ ङ. तावत्पूर्णसमावस्थं बहिष्ठं कु° । ९ च. °ति उच्छ्वासनिश्वासयोर्गति° । १० क. ख. ग. ङ. निःश्वासप्रश्वासयोर्गति° ।

रेचकपूरकयो[1]रुच्छ्वासनिःश्वासगती विद्येते इति चेन्न। अधिकमात्राभ्यासेन स्वभावे[2]सिद्धायाः समप्राणगतेर्विच्छेदात्। तमेवाभ्यासं सूत्रयति—"बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्या[3]भिः परिदृष्टो दीर्घः सूक्ष्मः" इति। रेचको बाह्यवृत्तिः। पूरक आन्तरवृत्तिः। कुम्भकः स्तम्भवृत्तिः। तत्रैकैको देशादिभिः परीक्षणीयः—तद्यथा स्वभावसिद्धे रेचके हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्ते श्वासः समाप्यते। अभ्यासेन तु क्रमेण नाभेराधाराद्वा वायुर्निर्गच्छति। चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्तिः। अत्र रेचके प्रयत्नातिशये सति नाभ्यादिप्रदेशक्षोभेणान्तर्निश्चेतुं शक्यम्। [4]बहिस्तु सूक्ष्मं तूलं धृत्वा तच्चालनेन [5]निश्चेतव्यम्। सेयं देशपरीक्षा। रेचककाले प्रणवस्याऽऽवृत्तयो दश विंशति[6]स्त्रिं(स्त्रिं)शदित्यादि कालपरीक्षा। अस्मिन्मासे प्रदिदिनं दश रेचका आगामिमासे विंशतिः, उत्तरमासे त्रिंशदित्यादिकालपरीक्षाभिः संख्या(ख्यां)परीक्षा(क्ष्य) यथोक्तदेशकालविशिष्टाः प्राणायामा एकस्मिन्दिने दश विंशतिस्त्रिं(स्त्रिं)शदित्यादिभिः सं(दि सं)ख्यापरीक्षा। पूरकेऽप्येवं योजनीयम्। यद्यपि कुम्भके देशव्याप्तिविशेषो नावगम्यते तथाऽपि कालसंख्याव्याप्तिरवगम्यत एव। यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो दीर्घो विरलतया [7]सूक्ष्मश्च भवति तथा प्राणोऽपि देशकालसंख्याधिक्येनाभ्यस्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मश्च संपद्यते। रेचकादिभ्यस्त्रिभ्योऽन्यं प्रकारं सूत्रयति—"बाह्याभ्यन्तर[9]विषयानपेक्षी चतुर्थः" इति। यथाशक्ति सर्वं वायुं विरेच्यानन्तरं क्रियमाणो बहिष्कुम्भको यथाशक्ति वायुमापूर्यानन्तरं क्रियमाणोऽन्तःकुम्भक इति रेचकपूरकावनादृत्य [10]केवलः कुम्भकोऽभ्यस्यमानः पूर्वत्रयापेक्षया चतुर्थो भवति। [11]निद्रातन्द्र्यादिप्रबलदोषप्रयुक्तानां रेचकादित्रयम्। दोषरहितानां चतुर्थ इति विवेकः। प्राणायामफलं सूत्रयति—"ततः क्षीयते प्रकाशावरणम्" इति। प्रकाशस्य सत्त्वस्याऽऽवरणं तमो निद्रालस्यादिहेतुस्तस्य क्षयो भवति। फलान्तरं सूत्रयति—"धारणासु योग्यता मनसः" इति। आधारनाभिचक्रहृदयभ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे चित्तस्य स्थापनं धारणा। "दे[12]शबन्धश्चित्तस्य धारणा" इति सूत्रणात्।

---

१ घ. °योर्हृद्युच्छ्वा° । २ ग. च. °वमात्रसि° । ३ ङ. °ख्यादिभिः । ४ ग. घ. च. बहिश्च सू° । ५ घ. च. निश्चेतव्यः । ६ क. ख. °त्रिंशदित्या दिभिः कालं परीक्ष्य। अ°। ङ. °त्रिंशदादिभिः कालं परीक्ष्य। अ°। ७ घ. च. सूक्ष्म एव भ° । ८ घ. च. °रपूर्वत्रयापेक्षोऽपि चतु° । ९ क. ख. °विषयावनपेक्ष्य चतु° । ग. विषयापेक्षोऽपि चतु° । १० ग. घ. च. केवलं । ११ ग. घ. च. निद्रातन्द्रादि° । १२ च. °शसंब° ।

श्रुतिश्च—

" मनः संकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् ।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ " इति ॥

प्राणायामेन रजोगुणकारिताच्चाञ्चल्यात्तमोगुणकारितादालस्याद्देश्च निवारितं मनस्तस्यां धारणायां योग्यं भवति ।

" प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया " ।

इत्यत्रत्येन युक्तिशब्देन योगिजनप्रसिद्धं शिरोरूपमेरुचालनम्, जिह्वाग्रेण घण्टिकाक्रमणं[1], नाभिचक्रे[2] ज्योतिर्ध्यानं विस्मृतिप्रदौषधसेवा चेत्येवमादिकं गृह्यते ।

तदेवमध्यात्मविद्यासाधुसंगमवासनाक्षयप्राणनिरोधाश्चित्तनाशोपाया[3] दर्शिताः । अथ तदुपायभूतं समाधिं वक्ष्यामः । पञ्चभूम्युपेतस्य चित्तस्य भूमित्रयत्यागेनावशिष्टं भूमिद्वयं[4] समाधिः । भूमयश्च योगभाष्यकृता दर्शिताः— " क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः " इति । आसुरसंपल्लोकशास्त्रदेहवासनासु वर्तमानं चित्तं क्षिप्तम्, निद्रातन्द्रादिग्रस्तं मूढम्, कादाचित्कध्यानयुक्तं क्षिप्ताद्विशिष्टतया विक्षिप्तम् । तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि विक्षेपोपसर्जनीभूतः समाधिर्योगपक्षे न वर्तते । विक्षेपान्तर्गततया दहनान्तर्गतबीजवत्सद्य एव विनश्यति । यस्त्वेकाग्रे चेतसि संभूतमर्थं[5] द्योतयति क्षिणोति च क्लेशान्कर्मबन्धनानि[6] श्लथयति, निरोधमभिमुखी करोति स संप्रज्ञातयोग इत्याख्यायते । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः । तत्र संप्रज्ञातसमाधिभूमिमेकाग्रतां[7] सूत्रयति—" शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः " इति । शान्तोऽतीतः । उदितो वर्तमानः । प्रत्ययश्चित्तवृत्तिः । अतीतप्रत्ययो यं पदार्थं गृह्णाति तमेव चेदुदितो गृह्णीयात्तावुभौ तुल्यौ भवतः । तादृशश्चित्तस्य[8] परिणाम एकाग्रतेत्युच्यते । एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति—"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः " इति । रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वान्पदार्थान्गृह्णाति । तस्य रजोगुणस्य निरोधाय क्रियमाणेन योगिनः प्रयत्नविशेषेण दिने दिने सर्वार्थता क्षीयते, एकाग्रता चोदेति तादृशश्चित्तस्य परिणामः समा-

---

१ घ. घण्टिकाभ्रामणं । च. घण्टिकाक्रमणं नाभिचक्रे हृदये ज्योति° । २ घ. °चक्रहृदये ज्यो° । ३ ग. घ. च. °नाशे द° । ४ ङ. भूमित्रयं समाधिः । चित्तभूमयश्च । ५ क. ख. समुद्भूतमर्थं । ग. घ. च. सद्भूतमर्थं । ६ ङ. °बन्धादिश्ल° । ७ ङ. °मिकैका° । ८ ग. घ. च. तादृशचित्तस्य ।

धिरित्युच्यते । तस्य समाधेरष्टाङ्गेषु यमनियमासनप्राणायामप्रत्याहाराः पञ्च बहिरङ्गानि(णि) । तत्र यमान्सूत्रयति—" अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" इति । हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयन्तीति यमाः । नियमान्सूत्रयति—" शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः " इति । जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयन्ति प्रेरयन्तीति नियमाः । यमनियमयोरनुष्ठानवैलक्षण्यं स्मर्यते—

" यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ।।

पतति नियमवान्यमेष्वसक्तो न तु यमवान्नियमालसोऽवसीदेत् ।
इति यमनियमौ समीक्ष्य बुद्ध्या यमबहुलेष्वनुसंदधीत बुद्धिम् ।। " इति ।।

यमनियमफलानि सूत्रयति—" तत्संनिधौ वैरत्यागः, क्रियाफलाश्रयत्वं, सर्वरत्नोपस्थानं, वीर्यलाभः, जन्मकथंतासंबोधः, जननादिभयाभावः, शौचात्स्वाङ्गजुगुप्सापरैरसंसर्गः, सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च संभवन्ति । संतोषादनुत्तमः सुखलाभः । कायेन्द्रियबुद्धिशुद्धिरशुद्धिक्षयात्तपसः, स्वाध्यायादिष्टदेवतासंप्रयोगः, समाधिसिद्धिरीश्वरप्रणिधानात् " इति । आसनप्राणायामौ व्याख्यातौ । प्रत्याहारं सूत्रयति—" स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" इति । शब्दस्पर्शरूपरसगन्धादिविषयास्तेभ्यो निवर्तिताः श्रोत्रादयश्चित्तस्वरूपमनुकुर्वन्तीव व्यतिष्ठन्ते । श्रु(स्मृ?)तिश्च भवति—

" शब्दादिविषयान्पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ।। " इति ।।

शब्दादयो विषया येषां श्रोत्रादीनां ते श्रोत्रादयः पञ्च मनःषष्ठानामेतेषामनात्मरूपेभ्यः शब्दादिभ्यो निवर्तनमात्मरश्मित्वेन चिन्तनं प्रत्याहारः स इत्यर्थः । प्रत्याहारफलं सूत्रयति—" ततः परमा वश्यतेन्द्रियाणाम् " इति । धारणाध्यानसमाधीन्सूत्रैस्त्रिभिः सूत्रयति—"देशबन्धश्चित्तस्य धारणा । तत्र

१ घ. °चर्यप° । २ ग. घ. च. °मान्कर्वीत सततं न कुर्यान्नियमा° । ३ क. ख. ग. ङ. रत्नोपस्थानं । ४ ग. घ. °रसङ्गः सत्त्व° । ५ क. ख. °स्यैकाग्रतेन्द्रिय° । ६ ग. घ. च. °नि भवन्ति । ७ घ. च. °शुद्धिः पापक्षयस्तपसः । ८ क. ख. °द्धिक्षयश्च तपसः । ग. °द्धिक्षयस्तपसः । ९ घ. स्वस्ववि° । १० ग. घ. च. °नामेषा° । ११ घ. निवर्तमानात्मरश्मि° । च. निवर्तमानमात्मरश्मि° ।

प्रत्ययैकतानता ध्यानम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति । आधारादिदेशाः पूर्वमुक्ताः । देशान्तरं श्रूयते—

" मनः संकल्पकं ध्यात्वा संक्षिप्याऽऽत्मनि बुद्धिमान् ।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ " इति ॥

यत्सर्ववस्तुसंकल्पकं मनः, तदात्मानमेव संकल्पयतु न त्वन्यदित्येवंविधः प्रयत्न इत्यात्मनि संक्षेपः । प्रत्ययस्यैकतानता तत्त्वैकविषयः प्रवाहः । स च द्विविधः—विच्छिद्य विच्छिद्य जायमानः संततश्चेति । तावुभौ क्रमेण ध्यानसमाधी भवतः । तदुभयं सर्वानुभवयोगिना दर्शितम्—

" चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ।
तत्साधनमतो ध्यानं यथावदुपदिश्यते ॥
विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत् ॥ " इति ॥

" ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ " इति ॥

तं च भगवत्पादा उदाजह्रुः—

" दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओम् ॥
दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः संपूर्णभूमा त्वज आत्मनि स्थितः ॥
अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः सदैव तृप्तश्च ततो विमुक्त ओम् ॥ " इति ॥

ननु संप्रज्ञातसमाधिरङ्गी स कथं ध्यानानन्तरभाविनोऽष्टमाङ्गस्य समाधेः स्थान उदाह्रियते । नायं दोषः । अत्यन्तभेदाभावात् । यथा वेदमधीयानो माणवकः पदे पदे स्खलन्पुनः पुनः समादधाति । अधीतवेदः सावधानो न स्खलति । अध्यापको निरवधानस्तन्द्रीं कुर्वन्नपि न स्खलति तथा विषयैक्येऽपि धारणापरिपाकतारतम्येन ध्यानसमाधिसंप्रज्ञातानामवान्तरभेदोऽवगन्तव्यः । धारणादित्रयं मनोविषयत्वात्संप्रज्ञातेऽन्तरङ्गम् । यमादिपञ्चकं तु बहिरङ्गम् । तदेत-

१ क. ख. ङ. °मनः, ध्यात्वा संक्षिप्याऽऽत्मनि तदा° । २ ग. घ. च. प्रयत्न आत्मनि । ३ ङ. चित्तैकाग्र्यवतो ज्ञा° । ४ ग. 'ति सर्वासं' । ५ क. ख. तथाऽक्षरोऽमृतः । ६ च. 'नन्तरं भावि' । ७ ङ. उदाहृत । ८ च. °हतद्धां क° । ९ ग. घ. °नधारणास° । १० ङ. °दो वाऽव° ।

त्सूत्रयति—"त्रयमन्तरङ्गं पूर्वेभ्यः" इति । ततः केनापि पुण्येनान्तरङ्गे प्रथमं लब्धे बहिरङ्गलाभाय नातिप्रयासः कर्तव्यः । यद्यपि पतञ्जलिना भौतिकभूततन्मात्रेन्द्रियाहंकारादिविषयाः संप्रज्ञातसविकल्पसमाधयो बहुधा प्रपञ्चितास्तथाऽपि तेषामन्तर्धानादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वान्नास्माभिस्तत्राऽऽदरः क्रियते । तथा च सूत्रितम्—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" इति । "स्थान्युपमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" इति च । स्थानिनो देवाः । उद्दालको देवैरामन्त्रितोऽप्यवज्ञाय देवान्निर्विकल्पसमाधिमेव चकारेत्युपाख्यायते । प्रश्नोत्तराभ्याम्[1]प्येवमेवावगम्यते—

श्रीरामः—

"जीवन्मुक्तशरीराणां कथमात्मविदां वर ।
शक्तयो नेह दृश्यन्ते आकाशगमनादिकाः ॥"

वसिष्ठः—

+"अनात्मविदमुक्तोऽपि नभोविहरणादिकम् ।
अणिमाद्यष्टसिद्धीनां सिद्धिजालानि वाञ्छति ॥"
*"द्रव्यमन्त्रक्रियाकाल[2]युक्त्याऽऽप्नोत्येव राघव ।
नाऽऽत्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ॥
आत्मनाऽऽत्मनि संतृप्तो नाविद्यामनुधावति ।
ये केचन जगद्भावास्तानविद्यामयान्विदुः ॥
कथं तेषु किलाऽऽत्मज्ञस्त्यक्ताविद्यो निमज्जति ।
द्रव्यमन्त्रक्रियाकालशक्तयः साधुसिद्धिदाः ॥
परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ।
सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः ॥
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते ॥" इति ॥
"न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इव ॥" इति ॥

+ क. ग. घ. ङ. पुस्तकेषु "अनात्मविदमुक्तोहि(ऽपि) सिद्धिजा ला(ता)नि वाञ्छति ।" इत्यर्धपद्यमेव दृश्यते । * ङ. पुस्तके—द्रव्यमन्त्रक्रियाकालास्तैः सह युक्तिर्योगस्तेन द्रव्यादियुक्तः सन्प्राप्नोतीत्यर्थं इत्यधिकम् ।

१ ग. °भ्यामित्थमेवाव° । घ. °भ्यामप्येवाव° । ङ. °भ्यामप्येवं गम्यते । २ क. ख. च. °कालशक्त्याऽऽप्नो° ।

" अपि शीतरुचावर्के सुतीक्ष्णे[१] चेन्दुमण्डले ।
अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥
चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः ।
इत्यस्याऽऽश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ "
" * यस्तु वा भावितात्माऽपि सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ॥ " इति[च] ॥

आत्मविषयस्तु संप्रज्ञातसमाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतुस्तस्मादत्राऽऽदरः कृतोऽस्माभिः ॥

अथ पञ्चमभूमिरूपो निरोधसमाधिर्निरूप्यते । तं च निरोधं सूत्रयति— " व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणामः " इति । व्युत्थानसंस्काराः समाधिविरोधिनस्ते चोद्दालकस्य समाधावुदाहृताः—

" कदाऽहं त्यक्त[२]मनने पदे परमपावने ।
चिरं विश्रान्तिमेष्यामि मेरुशृङ्ग इवाम्बुदः ॥
इतिचिन्तापरवशो बलादुद्दालको द्विजः ।
पुनः पुनः[३] स्तूपविश्य ध्यानाभ्यासं चकार ह ॥
विषयैर्नीयमाने तु चित्ते मर्कटचञ्चले ।
न स लेभे समाधानप्रतिष्ठां प्रीतिदायिनीम् ॥
कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम् ।
तस्यागच्छच्चित्तकपिरान्तरस्पर्शसंचयान् ॥
कदाचिदान्तरस्पर्शाद्बाह्यं विषयमाददे ।
तस्योड्डीय मनो याति कदाचित्त्रस्तपक्षिवत् ॥
कदाचिदुदितार्काभं तेजः पश्यति विस्तृतम् ।
कदाचित्केवलं व्योम कदाचिन्निबिडं तमः ॥
आगच्छतो यथाकामं प्रतिभासान्पुनः पुनः[४] ।
अच्छिनन्[५]मनसा शूरः खड्गेनेव रणे रिपून् ॥
विकल्पौघे समालूने[६] सोऽपश्यद्धृदयाम्बरे ।
तमश्छन्न[७]विवेकार्के लोल[८]कज्जलमेचकम् ॥

* ग. घ. ङ. पुस्तकेष्वयं श्लोको नास्ति ।

१ क. ख. घ. च. °क्ष्णेऽपीन्दु° । २ ग. घ. मुक्तमनने । ३ घ. °पुनरुपाविश्य । ङ. पुनस्तूपविशन्ध्याना° । ४ च. °नः । आच्छिदन्मनसा । घ. अच्छिदन्म° । ६ ग. घ. च. समालीने । ७ ग. घ. °श्छन्नं वि° । ८ च. लोककज्जल° ।

[1]तमप्युत्सादयामास [2]सम्यग्ज्ञानविवस्वता ॥
तमस्युपरते[3] स्वान्ते तेजःपुञ्जं ददर्श सः ॥
तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ।
तेजस्युपरते तस्य घूर्णमानं [4]मनो मुनेः ॥
निशाब्जवदगान्निद्रां तामप्याशु लुलाव सः ।
निद्राव्यपगमे तस्य व्योमसंवित्समुच्चयौ ॥
व्योम[5]संविदि नष्टायां मूढं तस्याभवन्मनः ।
मोहमप्येष मनसस्तं ममार्ज महाशयः ॥
ततस्तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ।
कामप्यवस्थामासाद्य विशश्राम मनः क्षणम् ॥" इति ॥

त एते व्युत्थानसं[6]स्कारा निरोधहेतुना योगिप्रयत्नेन[7] प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति । तथा सति निरोध एकैकस्मिन्क्षणे चित्तमनुगच्छति । सोऽयमीदृशश्चित्त[8]स्य निरोधपरिणामो भवति । ननु "प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः" इति न्यायेन चित्तस्य सर्वदा परिणामप्रवाहो वक्तव्यः । बाढम् । तत्र व्युत्थितचित्तस्य वृत्तिप्रवाहः स्फुटः । निरुद्धचित्तस्य तु कथमित्याशङ्क्योत्तरं सूत्रयति—"[9]ततः प्रशान्तवि(वा)हिता संस्कारात्" इति । यथा समिदाज्याहुतिप्रक्षेपे वह्निरुत्तरो[10]त्तरंवृद्ध्या प्रज्वलति । समिदादिक्षये प्रथमक्षणे किंचिच्छाम्यति । उत्तरोत्तरक्षणे शान्तिर्वर्धते, तथा वि(नि)रुद्धचित्तस्योत्तरोत्तराधिकः प्रशमः प्रवहति तत्र [11]पूर्वपूर्वप्रशमजनितः [12]संस्कार एवोत्तरोत्तरप्रशमस्य कारणम् । तामेतां [13]प्रशान्तवाहितां भगवान्विस्पष्टमुदाजहार—

"यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥

१ क. ख. च. तदप्यु° । ग. तमप्युत्पाटया° । २ च. स स्वज्ञान° । ३ च. °ते वाऽन्ते । ४ च. मनः पुनः । नि° । ५ ग. घ. ङ. °संविद्विन° । ६ ग. घ. °स्कारनि° । ७ घ. न प्रतिक्षणं । ८ ङ. °स्य प° । ९ क. ख. तत्र प्रशान्त° । च. तस्य प्रशान्तिवि° । १० च. °त्तरं प्र° । ११ ग. घ. पूर्वप्रशमितः । १२ च. संस्कार उत्तरोत्तर एव प्रशमकारणम् । १३ क. ख. प्रशान्तिवाहितां ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ " इति ॥

निरोधसमाधेः साधनं सूत्रयति—" विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषोऽन्यः " इति । विरामो वृत्त्युपरमस्तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येन संपादनं तत्पूर्वकस्तज्जन्योऽनन्तरातीतसूत्रे संप्रज्ञातसमाधेरुक्तत्वात्तदपेक्षयाऽन्योऽसंप्रज्ञातः समाधिः । तत्र वृत्तिरहितस्य चित्तस्वरूपस्य दुर्लक्ष्यत्वात्संस्काररूपेण चित्तं शिष्यते । विरामप्रत्ययजन्यत्वं भगवान्विस्पष्टमाह—

" संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ " इति ॥

काम्यमानाः स्रक्चन्दनवनितापुत्रमित्रगृहक्षेत्रादयो मोक्षशास्त्रकुशलविवेकिजनप्रसिद्धैर्बहुभिर्दोषैरुपेता[1] अप्यनाद्यविद्यावशात्तान्दोषानाच्छाद्य तेषु[2] विषयेषु सम्यक्त्वं कल्पयन्ति[3] । तस्माच्च संकल्पादिदं मे स्यादित्येवंरूपाः[4] कामाः प्रभवन्ति । तथा च स्मर्यते—

" संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।
काम जानामि ते मूलं संकल्पात्किल जायसे ॥
न त्वां संकल्पयिष्यामि समूलस्त्वं विनङ्क्ष्यसि । " [इति] ॥

तत्र विवेकेन विषयदोषेषु साक्षात्कृतेषु शुना वान्ते पायस इव कामास्त्य-

१ ग. घ. °रुपेता अनाद्यविद्यया तान्दोषा° । २ ग. तेषु सम्यक्त्वं मनः कल्पयति । त° । ३ ङ. संकल्पयन्ति । ४ ङ. °दित्यादिरूपाः । ५ च. °कामांस्त्यजन्ति । स्र° ।

ज्यन्ते । स्रक्चन्दनादिष्विव[1] ब्रह्मलोकादिष्वणिमाद्यैश्वर्येषु[2] च कामास्त्याज्या इत्यभिप्रेत्य सर्वानित्युक्तम् । मासोपवासव्रतिना तस्मिन्मासेऽन्ने त्यक्तेऽपि कामः पुनः पुनरुदेति तद्वन्मा भूदित्यशेषत इत्युक्तम् । कामत्यागे मनःपूर्वकप्रवृत्त्यभावेऽपि चक्षुरादीनां रूपादिषु[3] स्वभावसिद्धा प्रवृत्तिः, साऽपि प्रयत्नयुक्तेन मनसैव नियन्तव्या । देवतादर्शनादिष्वप्यननुसरणाय समन्तत इत्युक्तम् । भूमिकाजयक्रमेणोपरमविवक्षितत्वाच्छनैः शनैरित्युक्तम् । ताश्च भूमिकाश्चतस्रः कठवल्लीषु श्रूयन्ते—

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥" इति ॥

वाग्व्यापारो द्विविधः—लौकिको वैदिकश्च[4] । *जल्पादिरूपो लौकिकोजपादिरूपो वैदिकः । तत्र लौकिकस्य बहुविक्षेपकरत्वाद्व्युत्थानकालेऽपि योगी तं परित्यजेत् । अत एव स्मर्यते—

"मौनं योगासनं योगस्तितिक्षैकान्तशीलता[5] ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ॥" इति ॥

जपादिकं[6] निरोधसमाधौ परित्यजेत् । सेयं वाग्भूमिः प्रथमा । तां भूमिं प्रयत्नमात्रेण कतिपयैर्दिनैर्मासैर्वत्सरैर्वा दृढं विजित्य पश्चाद्द्वितीयायां मनोभूमौ प्रयतेत । अन्यथा बहुभूमिकाः(का)[7] प्रयासात्प्रथमभूमिपातेनैवोपरितनयोगभूमयो[8] विनश्येयुः । यद्यपि चक्षुरादयो निरोद्धव्यास्तथाऽपि तेषां वाग्भूमौ मनोभूमौ वाऽन्तर्भावो द्रष्टव्यः । ननु वाचं मनसि नियच्छेदित्यनुपपन्नम् । नहीन्द्रियस्येन्द्रियान्तरे प्रवेशोऽस्ति । मैवम्[9] । प्रवेशस्याविवक्षितत्वात् । नानाविक्षेपकारिणोर्वाङ्मनसयोर्मध्ये[10] प्रथमतो वाग्व्यापारनियमनेन मनोव्यापारमात्रपरिशेष इह विवक्षितः । गोमहिषाश्वादीनामिव वाङ्नियमे स्वाभाविके संपन्ने ततो ज्ञानात्मनि मनो नियच्छेत् । आत्मा त्रिविधः । ज्ञानात्मा महात्मा[11] शान्तात्मा चेति । जानात्यत्र स्थित आत्मेति ज्ञातृत्वोपाधिरहंकारोऽत्र ज्ञानशब्देन विवक्षितः । करणस्य मनसो नियम्यत्वेन पृथगुपात्तत्वात् । अहंकारो

---

* एतदादिवैदिक इत्यन्तं ग. घ. पुस्तकयोर्नास्ति ।

---

१ ग. घ. स्रक्चन्दनवनितादिविषयेष्विव । २ ग. घ. °ष्वणिमाद्यैश्वर्येषु । ३ घ. रूपादिग्रहणस्वभाव° । ४ ग. लौकिकोऽलौकिकश्च । ५ क. ख. च. °श्च लौकिको जल्पादिरूपो वैदिको जपादिरूपः । त° । ६ घ. °गस्थितिरेका° । ७ ग. °कं तु निरुद्धस° । घ °कं दण्डी नि° । ८ क. ख. ङ. °मिकाप्रसादवत्प्रथमभूमिकापाते° । ग. घ. °मिप्रयासात्प्र° । ९ च. °मयः सर्वा वि° । १० क. ख. च. °नसोर्म° । ११ क. ख. ग. ङ. महानात्मा ।

द्विविधः—विशेषरूपः सामान्यरूपश्चेति । अयमहमेतस्य पुत्र इत्येव(वं) व्यक्तमभिमन्यमानो विशेषरूपः । अस्मीत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः । स च सर्वव्यक्तिषु व्याप्तत्वान्महानित्युच्यते । ताभ्यामहंकाराभ्यां द्वाभ्यामुपहितौ द्वावात्मानौ । निरुपाधिकः शान्तात्मा, तदेतत्सर्वमन्तर्बहिर्भावेन वर्तते । शान्त आत्मा सर्वान्तरश्चिदेकरसस्तस्मिन्नाश्रितं जडशक्तिरूपमव्यक्तं मूलप्रकृतिः। सा च प्रथमं सामान्याहंकाररूपं महत्तत्त्वं नाम धृत्वा व्यक्ती भवति । ततो बहिर्विशेषाहंकाररूपेण ततो बहिर्मनोरूपेण ततो बहिर्वागादीन्द्रियरूपेण । तदेतदभिप्रेत्योत्तरमान्तरत्वं विविनक्ति श्रुतिः—

" *इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
+पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ " इति ॥

एवं सत्यत्र नानाविधसंकल्पविकल्पसाधनकरणरूपं मनोऽहंकर्तरि नियच्छेत् । मनोव्यापारान्परित्यज्याहंकारमात्रं शेषयेत् । न चैतदशक्यमिति वाच्यम्,

" तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ "
इति वदन्तमर्जुनं प्रति भगवतोत्तराभिधानात् ।

" असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ " इति ॥

अभ्यासवैराग्ये पतञ्जलिसूत्रोदाहरणेन व्याख्यास्येते । पूर्वपूर्वभूमिदार्ढ्यरहितोऽसंयतात्मा । तत्सहितो वश्यात्मा । उपायतः प्राप्तिं गौडपादाचार्याः सदृष्टान्तमाहुः—

" उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥
×बहुभिर्न विरोद्धव्यमेकेनापि बलीयसा ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ॥ " इति ॥

---

* ग. घ. च " इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः " इति भिन्नः पाठः । + ग. ङ. पुस्तकयोरेतच्छ्लोकार्धं न दृश्यते । × क. ख. ग. घ. च. पुस्तकेषु बहुभिरित्ययं श्लोको न विद्यते ।

---

१ घ. इत्येवं वक्तुमभि° ।

अत्र संप्रदायविद आख्यायिकामाचक्षते—"कस्यचित्किल पक्षिणोऽण्डानि तीरस्थान्युदधिरुत्सेकेनापजहार। तं च समुद्रं शोषयामीति प्रवृत्तः स च पक्षी स्वमुखाग्रेणैकैकं जलबिन्दुं बहिः प्रतिक्षिपति। तदा बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽप्यनुपरतः प्रत्युत तानपि सहकारिणो वव्रे। तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्वानवलोक्य कृपालुर्नारदो गरुडं समीपे प्रेषयामास। ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डानि पक्षिणे ददौ॥" एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति। अखेदश्च मध्ये मध्ये तदनुकूलव्यापारमिश्रणेन संपद्यते। यथौदनं भुञ्जानस्तद्ग्रासान्तरे चोष्यलेह्यादीनास्वादयति तद्वत्। इदमेवाभिप्रेत्य वसिष्ठ आह—

"चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत्।
गुरुशुश्रूषया भागमव्युत्पन्नस्य संक्रमः॥
किंचिद्व्युत्पत्तियुक्तस्य भागं भोगैः[1] प्रपूरयेत्।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया॥
व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम्।
द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया॥" इति॥

भोगशब्देनात्र जीवनहेतुर्भिक्षाटनादिव्यापारो[2] वर्णाश्रमोचितव्यापारश्चोच्यते। घटिकामात्रं मुहूर्तं वा यथाशक्ति योगमभ्यस्य ततो मुहूर्तं शास्त्रश्रवणेन परिचर्यया वा गुरूननुगम्य[3] मुहूर्तं स्वदेहमनुसृत्य मुहूर्तं योगशास्त्रं पर्यालोच्य पुनर्मुहूर्तं योगमभ्यसेत्। एवं योगप्राधान्येन व्यापारान्तराणि मेलयंस्तानि द्रागभ्यस्य शयनकाले तद्दिनगतान्योगमुहूर्तान्गणयेत्। ततः परेद्युर्वा परपक्षे वा परमासे वा योगमुहूर्तान्वर्धयेत्। तथा चैकैकस्मिन्मुहूर्त एकैकक्षणयोगेऽपि संवत्सरमात्रेण भूयान्योगकालो भवति। न चैवं योगैकशरणत्वे व्यापारान्तराणि लुप्येरन्निति शङ्कनीयम्। लुप्तेतरकृत्स्नव्यापारस्यैव योगेऽधिकारात्[4]। अत एव विद्वत्संन्यासोऽपेक्ष्यते। तस्मात्तदेकनिष्ठः पुमानध्येतृवणिगादिवत्क्रमेण योगारूढो भवति। यथाऽध्येता माणवकः पादांशं पादमर्धर्चमृचमृग्द्वयं वर्गं च क्रमेण पठन्द्वादशवर्षैरध्यापको[5] भवति। यथा च वाणिज्यं कुर्वन्नेकनिष्कद्विनिष्कादिक्रमेण लक्षपतिः क्रोडपतिर्वा[6] भवति तथा ताभ्यां वणिगध्येतृभ्यां सहैवोपक्रम्य मत्सरग्रस्त इव युञ्जानस्तावता कालेन कुतो न योगमारोहेत्। तस्मात्पुनः पुनः प्राप्यमाणान्संकल्पविकल्पानुद्दालकवत्पौरुष[7]-

---

१ घ. च. भोगेन पू°। २ क ख.च. °क्षादिर्व्यापा°। ग. घ. °क्षाव्या°। ३ ग. घ. गुरूनुपगम्य। ४ ग. घ. योगाधिकारात्। ५ ग. ङ. °न्दशव°। ६ घ. °तिः कोटिपति°। ७ ङ. °वत्पुरु°।

प्रयत्नेन परित्यज्याहंकर्तरि ज्ञानात्मनि मनो नियच्छेत् । तामेतां द्वितीयभूमिकां विजित्य[1] बालमूकादिवन्निर्मनस्त्वे स्वाभाविके सति ततो विशेषाहंकाररूपं विस्पष्टं ज्ञानात्मानमस्पष्टे सामान्याहंकारे महत्तत्त्वे नियच्छेत् । यथा स्वल्पां तन्द्रां प्राप्नुवतो विशेषाहंकारः स्वत एव संकुचति विनैव तन्द्रां तथा विस्मरणे प्रयतमानस्याहंकारसंकोचो भवति सेयं लोकप्रसिद्धया तन्द्र्या तार्किकाभिमतनिर्विकल्पकज्ञानेन च समाना महत्तत्त्वमात्रपरिशेषावस्था तृतीया भूमिः । अस्यां चाभ्यासपाटवेन वशीकृतायां तमेतं सामान्याहंकाररूपं महान्तमात्मानं निरुपाधितया शान्ते चिदेकरसस्वभावे नियच्छेत् ।

"महत्तत्त्वं तिरस्कृत्य चिन्मात्रं परिशेषयेत् ॥"

अत्रापि पूर्वोक्तविस्मृतिप्रयत्न एव ततोऽप्यतिशयेनोपायतामापद्यते । यथा शास्त्राभ्यासप्रवृत्तस्य व्युत्पत्तेः प्राक्प्रतिग्रन्थव्याख्यानापेक्षायामपि व्युत्पन्नस्य स्वत एवोत्तरग्रन्थार्थः प्रतिभाति तथा सम्यग्वशीकृतपूर्वभूमेर्योगिन उत्तरभूम्युपायः स्वत एव प्रतिभाति ।

तदाह योगभाष्यकारः—

"योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥" इति ॥

योग उत्तरभूमिका योगेन ज्ञातव्यो योगो योगात्प्रवर्तते यो योगाप्रमत्तो योगेन पूर्वभूमिकोत्तरभूमिकायोगेन स योगी रमते चिरमिति । ननु महत्तत्त्वशान्तात्मनोर्मध्ये महत्तत्त्वोपादानमव्यक्ताख्यं तत्त्वं श्रुत्योदाहृतम् । तत्र कुतो नियमनं नाभिधीयत इति चेन्न । लयप्रसङ्गादिति ब्रूमः । यथा घटोऽनुपादाने जले निरुध्यमानो न लीयते, उपादानभूतायां तु मृदि लीयते तथा महत्तत्त्वमात्मनि न लीयते, अव्यक्ते तु लीयते । न च स्वरूपलयः पुरुषार्थः,[2] आत्मदर्शनानुपयोगात् । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।" इति पूर्ववाक्ये[3] आत्मदर्शनमभिधाय सूक्ष्मत्वसिद्धये निरोधस्याभिधानात्, लयस्य प्रतिदिनं सुषुप्तौ स्वतः सिद्धत्वेन प्रयत्नवैयर्थ्याच्च । ननु धारणाध्यानसमाधिभिः[4] साध्यस्य संप्रज्ञातस्यैकाग्र्यवृत्तिरूपत्वेन दर्शने हेतुत्वेऽपि शान्तात्मन्यवरुद्धस्यासंप्रज्ञातसमाधिमापन्नस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तिवन्न[5] दर्शनहेतुत्वमिति चेन्न । स्वतः सिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात् ।

अत[6] एव श्रेयोमार्गेऽभिहितम्—

---

१ क. ख. च. 'त्न । विल' २ ङ. °र्थः । स्वात्मद° । ३ ग. घ. °वाक्येऽभिधाय । ४ ग. °माधिसाध्यसंप्रज्ञा° ५ ग. घ. सुषुप्तवन्न । ६ ग. घ. अतः श्रेयो° ।

" आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् ।
आत्मैकाकारतया [1]तिरस्कृ[2]तानात्मदृष्टिं(ष्टि) विदधीत ॥ " इति ॥

यथा घट उत्पद्यमानः स्वतो वियत्पूर्ण एवोत्पद्यते जलतन्दु(ण्डु)-ला[3]दिपूरणं तूत्पन्ने घटे पश्चात्पुरुषप्रयत्नेन भवति । तत्र जलादौ निःसारितेऽपि न वियन्निःसारयितुं शक्यते । मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव । तथा चित्तमुत्पद्यमानमात्मचैतन्यपूर्णमेवोत्पद्यते । उत्पन्ने चित्ते पश्चान्मूषानिषिक्तद्रुतताम्रवद्घटपटरूपरससुखदुःखा[4]दिवृत्तिरूपत्वं भोगहेतुधर्माधर्मा[5]दिवशाद्भवति । तत्र रूपरसाद्यनात्माकारे नि[6]वारितेऽपि निर्निमित्तश्चिदाकारो न निवारयितुं शक्यते । ततो निरोधसमाधिना नि[7]र्वृत्तिकेन संस्कारमात्रशेष्यतया सूक्ष्मत्वेन चिदात्ममात्राभिमुखत्वादेकाग्रेण चित्तेन निर्विघ्नमात्माऽनुभूयते । अनेनैवाभिप्रायेण वार्तिककारसर्वानुभवयोगिनावाहतुः—

" सुखदुःखादिरूपित्वं धियो धर्मादिहेतुतः ।
निर्हेतु त्वात्मसंबोधरूपत्वं वस्तुवृत्तितः ॥
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः ॥ " इति ॥

आत्मदर्शनस्य स्वतःसिद्धत्वेऽप्यनात्मदर्शनवारणाय निरोधाभ्यासः । अत एवोक्तम्—

" आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । " इति ।

योगशास्त्रस्य चित्तचिकित्सकसमाधिमात्रे प्रवृ[9]त्तत्वान्निरोधसमाधावात्मदर्शनं तत्र न साक्षादुक्तम् । भङ्ग्यन्तरेण त्वभ्युपगम्यते । " योगश्चित्तवृत्तिनिरोधः " इति सूत्रयित्वा " तदा द्रष्टुः स्वरूपेणावस्थानम् " इतिसूत्रणात् । यद्यपि निर्विकारो द्रष्टा सदा स्वरूप एवावतिष्ठते तथाऽपि वृत्तिषूत्पद्यमानासु तत्र [11]चिच्छायायां प्रतिबिम्बितायां तदविवेकादस्वस्थ इव द्रष्टा भवति । तदप्यनन्तरसूत्रेणोक्तम्—" वृत्तिसारूप्यमितरत्र " इति । अन्यत्रापि सूत्रितम्— " सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात् " इति । "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् " इति च । निरोधस-

१ क. ख. ग. तिरस्कृत्यानात्म° । २ ग. ङ. °स्कृत्यानात्मदृष्टिंविदधीत । ३ ङ. °पूरणमुत्पन्ने । ४ ग. घ. °खादिरूपत्वं । ५ ग. घ. च. °धर्मादिवशा° । ६ घ. °रितेऽप्यनिमि° । ७ ग. घ. च. निवृत्तिकेन । ८ ङ. धर्मादिरूपतः । ९. ग. घ. °त्मवा° । १० क. ख. च. °त्ततया निरो° । ११ क. ख. घ. च. चितिच्छायायां ।

माधिना शोधिते त्वंपदार्थे साक्षात्कृतेऽपि तस्य ब्रह्मत्वं गोचरयितुं महावाक्येन ब्रह्मविद्यानामकं वृत्त्यन्तर[1]मुत्पद्यते । न च शुद्धत्वंपदार्थसाक्षात्कारे निरोधसमाधिरेक एवोपायः । किं तु चिज्जडविवेकेनापि पृथक्कृते तत्साक्षात्कार[2]संभवात् ।

अत एव वसिष्ठ आह—

" द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ " इति ॥

" असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः ।
प्रकारौ द्वौ ततो देवो जगाद [3]परमेश्वरः ॥ " इति[च] ॥

ननु विवेकोऽपि योगे पर्यवस्यति दर्शनवेलायामात्ममात्रगोचराया एकाग्रवृत्तेः क्षणिकसंप्रज्ञातरूपत्वात् । बाढम् । तथाऽपि संप्रज्ञातासंप्रज्ञातयोः स्वरूपतः साधनतश्चास्त्येव महद्वैलक्षण्यम् । वृत्त्यवृत्तिभ्यां स्फुटः स्वरूपभेदः । साधनं तु संप्रज्ञातस्य सजातीयत्वाद्धारणादित्रयमन्तरङ्गम् । असंप्रज्ञात[4]स्यावृत्तिकस्य विजातीयत्वाद्बहिरङ्गम् । तथा च सूत्रम्—" तदपि बहिरङ्गं निर्बीजस्य " इति । विजातीय[5]त्वेऽपि बहुविधानात्मवृत्तिनिवारणेनोपकारितया बहिरङ्गत्वमविरुद्धम् । तदेवोपकारित्वं विशदयितुं सूत्रयति—" श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् " इति । केषांचिद्देवादीनां पूर्वसूत्रे जन्मनैव समाधिमुक्त्वा मनुष्यान्प्रत्येतदुच्यते । ममायं योग एव परमपुरुषार्थसाधनमिति प्रत्ययः श्रद्धा[6] । सा चोत्कर्षश्रवणेनोपजायते । तदुत्कर्षश्च स्मर्यते—

" तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ " इति ॥

उत्तमलोकसाधनत्वात्कृच्छ्रचान्द्रायणादितपसो ज्योतिष्टोमादिकर्मणश्च योगोऽधिकः । ज्ञानं प्रत्यन्तरङ्गत्वाच्चित्तविश्रान्तिहेतुतया ज्ञानादप्यधिकत्वम् । एवं ज्ञानतो योगे श्रद्धा जायते । तस्यां च श्रद्धायां वासितायां वीर्यमुत्साहो भवति—सर्वथा योगं संपादयिष्यामीति । एतादृशेनोत्साहेन[7] तदा तदनुष्ठेयानि योगाङ्गानि स्मर्यन्ते । [8]तया च स्मृत्या सम्य[9]गनुष्ठितसमाधेरध्यात्मप्रसादे सत्यृतंभरा प्रज्ञोदेति । तत्प्रज्ञापूर्वकस्तत्प्रज्ञाकारणकोऽसंप्र-

१ घ. °मुत्पाद्यते । २ घ. °संभवः । अ° । ३ ङ. परमः शिवः । ४ ग. ङ. °तस्य त्ववृत्ति° । ५ ङ. °यस्यापि । ६ ग. घ. च. °द्धा स चो° । ७ ग. च. °न तदनु° । घ. °न तदानु° । ८ ग. घ.. ङ. तथा । ९ ग. घ. °म्यगुपातिष्ठतः समा° ।

ज्ञातसमाधिरितरेषां देवादिभ्योऽर्वाचीनानां मनुष्याणां सिध्यति । तां च प्रज्ञां सूत्रयति—"ऋतंभरा तत्र प्रज्ञा" इति । ऋतं सत्यं वस्तुयाथात्म्यं बिभर्ति प्रकाशयतीति ऋतंभरा । तत्र तस्मिन्समाध्युत्कर्षजन्येऽध्यात्मप्रसादे सतीत्यर्थः । ऋतंभरत्वोपपत्तिं सूत्रयति—"श्रुतानुमानप्रज्ञाभ्यामन्यविषयाविशेषार्थत्वात्" इति । सूक्ष्मव्यवहितविप्रकृष्टवस्तुष्वयोगिप्रत्यक्षत्वं न प्रवर्तते । आगमानुमानाभ्यां तानि वस्तून्ययोगिभिर्ज्ञायन्ते । ते च शास्त्रानुमानजन्ये प्रज्ञे वस्तुसामान्यमेव गोचरयतः । इदं तु योगिप्रत्यक्षं विशेषवस्तुगोचरत्वादृतंभरत्वम् । तस्य योगिप्रत्यक्षस्यासंप्रज्ञातसमाधौ बहिरङ्गत्वसिद्ध्यर्थमुपकारित्वं सूत्रयति—"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" इति । असंप्रज्ञातसमाधेर्बहिरङ्गसाधनमुक्त्वा तन्निरोधप्रयत्नस्यान्तरङ्गसाधनतां सूत्रयति—"तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" इति । सोऽयं समाधिः सुषुप्तिसमानः[१] साक्षिचैतन्येनानुभवितुं शक्यः । न चासौ सर्वधीवृत्तिराहित्यात्सुषुप्तिरेवेति शङ्कनीयम् । मनः[२]स्वरूपसदसत्त्वाभ्यां विशेषात् ।

तदुक्तं गौडपादाचार्यैः—

"निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।
प्रचारः स तु विज्ञेयः सुषु[३]प्त्यन्यो न तत्समः ॥
लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते ।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥" इति ॥

(*माण्डूक्यशाखायामपि श्रूयते—)

"द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा[६] च तुर्ये न विद्यते ॥
स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥
अन्यथा गृह्णतः स्वप्नो निद्रातत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥" इति ॥

आद्यौ विश्वतैजसौ । अद्वैतस्य वस्तुनोऽन्यथाग्रहणं नाम द्वैतरूपेण प्रतिभासः । स च विश्वतैजसयोर्वर्तमानः स्वप्न इत्युच्यते । तत्त्वस्याज्ञानं निद्रा ।

* एतच्चिह्नान्तर्गतमधिकमिव दृश्यते द्वैतस्येत्यादीनां गौडपादाचार्यकृतकारिकास्वेव दृश्यमानत्वात् ।

१ घ. 'ज्ञाभ्यां सामान्य' । २ ग. घ. प्रतिदधाति । ३ घ. 'ति न श' । ४ घ. ङ. मनसः स्वरूपस्य सं' । ५ ग. 'षुप्तेऽन्यो । घ. 'षुप्तान्यो । ६ घ. सा तुरीये न ।

सा च विश्वतैजसप्राज्ञेषु वर्तते । तयोः स्वप्ननिद्रयोः स्वरूपभूतयोर्विपर्यासो मिथ्याज्ञानम् । तस्मिन्विद्यया क्षीणे सति तुरीयं पदमद्वैतं वस्त्वश्नुते[1] । नन्वस्त्वेवमसंप्रज्ञातसमाधिसुषुप्त्योर्महान्भेदः । तत्र तत्त्वविदिदृक्षोर्दर्शनसाधनत्वेन समाध्यपेक्षायामपि दृष्टतत्त्वस्य जीवन्मुक्तये नास्ति तदपेक्षा । रागद्वेषादिक्लेशबन्धस्य सुषुप्त्याऽपि निवृत्तेः । मैवम् । किं प्रतिदिनं स्वतः प्राप्ता[3] कादाचित्की सुषुप्तिर्बन्धनिवर्तिका, किं वाऽभ्यासेन निरन्तरवर्तिनी, आद्येऽपि किं सुषुप्तिकालीनस्य क्लेशबन्धस्य निवृत्तिः, किं वा कालान्तरवर्तिनः । नाऽऽद्यः । अप्रसक्तेः । नहि मूढानामपि सुषुप्तौ क्लेशबन्धः । अन्यथाऽऽयासः प्रसज्येत । न द्वितीयः । असंभवात् । नह्यन्यकालीनया सुषुप्त्या कालान्तरवर्तिनः क्लेशस्य क्षयः संभवति । अन्यथा मूढानामपि जागरणस्वप्नयोः क्लेशस्य क्षयः प्रसज्येत । नापि सुषुप्तौ नैरन्तर्यमभ्यसितुं शक्यम् । तस्याः कर्मक्षयनिमित्तत्वात् । तस्मात्तत्त्वविदोऽपि क्लेशक्षयायास्त्येवासंप्रज्ञातसमाध्यपेक्षा । तस्य च समाधेर्गवादिष्विव[4] वाङ्निरोधः प्रथमा भूमिः । बालमूढादिष्विव[5] निर्मनस्त्वं द्वितीया । तन्द्र्यामिवाहंकाररराहित्यं तृतीया । सुषुप्ताविव[2] महत्तत्त्वराहित्यं चतुर्थी । तदेतद्भूमिचतुष्टयमभिप्रेत्य शनैः शनैरुपरमेदित्युक्तम् । अत्र चोपरमे धृतिगृहीता बुद्धिः साधनं महदहंकारमनोवागादीनां स्वत एव तीव्रवेगेन(ण) बहिः प्रवहतां कूलंकषाया नद्या इव निरोधे धैर्यं महदपेक्षितम् । बुद्धिर्विवेकः पूर्वा भूमिर्जिता न वेति परीक्ष्य जितायामुत्तरभूम्युपक्रमः । अजितायां तु सैव पुनरभ्यसनीयेति तदा तदा विविच्यात् । आत्मसंस्थमित्यादिना सार्धश्लोकेन चतुर्थभूम्यभ्यासोऽपि स्मृतः । गौडपादाचार्या आहुः—

“ उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥
लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥
नाऽऽस्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।
निश्चलं निश्चरं चित्तमेकी कुर्यात्प्रयत्नतः ॥

१ घ. °श्रुतेऽनुभवतीत्यर्थः । न° । २ ग. सुषुप्ताविव नि° । घ. सुषुप्तावपि । ३ ग. घ. प्राप्तकादाचित्कसु° । ४ ग. °र्गवादिष्विवावरो° । ङ. °र्गवाश्वादिष्विव । ५ ग. बालमुग्धादि° । घ. बालमूकादि° । ङ. बालकादिष्वि° ।

यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।
अलिङ्गनम[1]नाभासं निष्पन्नं ब्रह्म तत्तदा ॥ " इति ॥

लयविक्षेपकषायसमप्राप्तयश्चतस्रश्चित्तस्यावस्थाः । तत्र निरुध्यमानं चित्तं विषयेभ्यो व्यावृत्तं सत्पूर्वाभ्यासवशाद्यदि लयाय सुषुप्तयेऽभिमुखं भवेत्तदानीमु[2]त्थापनप्रयत्नेन लयकारणनिवारणेन वा[3] चित्तं सम्यक्प्रबोधयेत् । लयहेतवो निद्राशेषाजीर्णबह्वशनश्रमाः । अत एवाऽऽहुः—

" स[4]मापद्य निद्रां सुजीर्णाल्पभोजी
श्रमत्त्या[5]ग्यबाधे विविक्ते[6] प्रदेशे ।
सदाऽऽसीत निस्तृष्ण एवाप्रयत्नोऽ-
थवा प्राणरोधो निजाभ्यासमार्गात् ॥ "इति ॥

लयादुत्थापितं चित्तं दैनंदिनप्रबोधाभ्यासवशाद्यदि कामभोगयोर्विक्षिप्येत तदा विवेकिजनप्रसिद्धभोग्यवस्तुगतसर्वदुःखानुस्मरणेन शास्त्रप्रसिद्धजन्मादिरहिताद्वितीयब्रह्मतत्त्वानुस्मरणपूर्वकेन(ण) भोग्य[7]वस्त्वदर्शनेन च पुनः पुनर्विक्षेपाच्चित्तं शमयेत् । कषायस्तीव्रचित्तदोषस्तीव्ररागद्वेषादिवासना तया ग्रस्तं चित्तं कदाचित्समाहितमिव लयविक्षेपरहितं दुःखैकाग्रमवतिष्ठते तादृशं तच्चित्तं विजानीयात् । समाहितचित्ता[8]द्विवेकेनावगच्छेत् । असमाहितमेतदित्यवगम्य लयविक्षेपवत्कषायस्य प्रतीकारं कुर्यात् । समशब्देन ब्रह्माभिधीयते ।

" समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । " इति स्मृतेः ।

लयविक्षेपकषायेषु परिहृतेषु परिशेषाच्चित्तेन समं ब्रह्म प्राप्यते । तच्च समप्राप्तं चित्तं कषायलयभ्रान्त्या न चालयेत् । सूक्ष्मया बुद्ध्या[9] लयकषायप्राप्ती विविच्य तस्यां समप्राप्तावतिप्रयत्नेन चिरं स्थापयेत् । स्थापिते तस्मिन्ब्रह्मस्वरूपभूतः परमानन्दः सम्यगाविर्भवति । तथा चोदाहृतम्—

" सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् । " इति ॥

श्रुतिश्च भवति—

" समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ " इति ॥

ननु समाध्याविर्भूतब्रह्मानन्दस्य बुद्धिग्राह्यत्वं श्रुतिस्मृतिभ्यामभिहितम् ।

---

१ ख. ङ. °मनाभ्यासं । २ क. ख. ग. च. °मुत्थानप्रय° । ३ ग. घ वा तच्चित्तं । च. वा ततश्चित्तं । ४ ग. समापद्य । घ. ङ. समाराध्य । ५ च. °त्यागबाधे । ६ ङ. विभक्ते । ७ घ. च. °वस्तुद° । ८ ङ. °त्तात्पृथक्त्वेनासमाहितं चित्तं विवे° । ९ ग. घ. 'पितेऽस्मि' ।

आचार्यैस्तु—"नाऽऽस्वादयेत्सुखं तत्र" इति बुद्धिग्राह्यत्वं प्रतिषिध्यते[1]। नायं दोषः। तत्र निरोधसुखं बुद्धिग्राह्यं न प्रतिषिध्यते, किं तु समाधिविरोधिनो व्युत्थानरूपस्य परामर्शस्यैव प्रतिषेधात्। यथा निदाघदिवसेषु मध्याह्ने जाह्नवीह्रदनिमग्नेनानुभूयमानमपि शैत्यसुखं तदा वक्तुमशक्यं पश्चादुन्मग्नेनाभिधीयते। यथा वा सुषुप्तावविद्यावृत्तिभिरतिसूक्ष्माभिरनुभूयमानमपि स्वरूपसुखं तदानीं सविकल्पकेनान्तःकरणवृत्तिज्ञानेन ग्रहीतुमशक्यम्। प्रबोधकाले तु स्मृत्या विस्पष्टं परामृश्यते। तथा समाधौ वृत्तिरहितेन संस्कारमात्रशेषतया सूक्ष्मेण वा चित्तेन सुखानुभवः श्रुतिस्मृत्योर्विवक्षितः। महदिदं समाधिसुखमन्वभूवमित्येतादृशो व्युत्थितस्य सविकल्पकः[2] परामर्शोऽत्राऽऽस्वादनम्। तदेवाऽऽचार्यैः प्रतिषिध्यते। तमेव स्वाभिप्रायं प्रकटयितुं निःसङ्गः प्रज्ञया भवेदित्युक्तम्। प्रकृष्टं सविकल्पकं ज्ञानं प्रज्ञा तया सह सङ्गं परित्यजेत्। यद्वा पूर्वोक्ता धृतिगृहीता बुद्धिः प्रज्ञा। तदात्मकेन साधनेन सुखास्वादनतद्वर्णनादिरूपामासक्तिं वर्जयेत्। समाधौ ब्रह्मानन्दे[3] निमग्नं चित्तं यदि कदाचित्सुखास्वादनाय वा शीतवातमशकाद्युपद्रवेण वा निश्चरेत्तदा निश्चरत्तच्चित्तं[4] पुनः पुनर्निश्चलं यथा भवति तथा परब्रह्मणा सहैकी कुर्यात्। तत्र च निरोधप्रयत्न एव साधनम्। एकीभाव एव यदा न लीयत इत्यनेन स्पष्टी क्रियते। अलिङ्गनमनाभासमित्याभ्यां पदाभ्यां कषायसुखास्वादौ प्रतिषिध्येते। लयविक्षेपकषायसुखास्वादेभ्यो रहितं चित्तमविघ्नेन ब्रह्मण्यवस्थितं भवति। एतदेवाभिप्रेत्य कठवल्लीषु पठ्यते[5]—

" यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टेत[6] तामाहुः परमां गतिम्॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्[7]।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ॥ " इति॥

उपेक्षितो योग इन्द्रियवृत्तीनां प्रभवं करोति। अनुष्ठितस्तु तासां लयहेतुः। अत एव योगस्य स्वरूपलक्षणं सूत्रयति—" योगश्चित्तवृत्तिनिरोधः " इति। वृत्तीनामानन्त्यान्निरोधोऽशक्य इति शङ्कां वारयितुमियत्तां सूत्रयति—" वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः" इति। रागद्वेषादिक्लेशरूपा आसुरवृत्तयः

१ घ. °ध्यत इति चेन्नायं-। २ ग. घ. °कल्पः परामर्श आस्वादनम्। ३ क. ख. °नन्दममं चित्तं। च. °नन्देऽतिमग्नं चित्तं। ४ क. ख. निश्चरं चित्तं पुनर्निश्चलं भवति। घ. निश्चरितं चित्तं पुनः पुनर्नि°। ५ क. ख. च. श्रूयते। ६ ग. °त तमाहुः। ७ ग. स्थिरमिन्द्रियधारणम्।

क्लिष्टाः। रागादिरहिता दैववृत्तयोऽक्लिष्टाः । यद्यपि पञ्चस्वेव क्लिष्टा[1]नामक्लि- ष्टा[2]नां चान्तर्भावस्तथाऽपि क्लिष्टा एव निरोद्धव्या इति मन्दबुद्धिं वारयितुं ताभिः सहाक्लिष्टा अप्युदाहृताः। नामधेयलक्षणाभ्यां वृ[3]त्तिं विशदयितुं सूत्र- षट्कमाह—" प्रमाणविपर्ययविकल्पनिद्रास्मृतयः[4] ( १ ), प्रत्यक्षानुमानागमाः प्रमाणानि ( २ ), विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ( ३ ), शब्द- ज्ञानानुपाती वस्तुशून्यो विकल्पः ( ४ ), अभावप्रत्य[5]यालम्बना वृत्तिर्निद्रा[6] ( ५ ), अनुभूतविषयस्यासंप्रमोषः स्मृतिः (६)," इति। वस्त्वभावः प्रतीयते यस्मिस्तमस्यावरके सति तत्तमोऽभावप्रत्ययः। तमोगुणं विषयं कुर्वती वृत्तिर्नि- द्रेत्युच्यते। अनुभूतविषयस्यासंप्रमोषस्तदनुभवजन्यमनुसंधानम् । पञ्चविधवृत्ति- निरोधसाधनं[7] सूत्रयति—" अभ्यासवैराग्याभ्यां तन्निरोधः " इति। यथा तीव्रवेगोपेतं[8] नदीप्रवाहं सेतुबन्धनेन निवार्य कुल्या[9]प्रणयनेन क्षेत्राभिमुखं तिर्य- क्प्रवाहान्तरमुत्पाद्यते तथा वैराग्येण चित्तनद्या विषयप्रवाहं निवार्य समा- ध्यभ्यासेन प्रशान्तः प्रवाहः संपाद्यते। मन्त्रजपदेवताध्यानादीनां क्रियारूप- त्वेनाऽऽवृत्तिलक्षणोऽभ्यासः संभाव्यते। सर्वव्यापारोपरमरूपस्य संमाधेः[10] को नामाभ्यास इति शङ्कां वारयितुं सूत्रयति—" तत्र स्थितौ यत्नोऽभ्यासः " इति। स्थितिर्नैश्चल्यं निरोधः। यत्नो मानस उत्साहः। स्वत एव बहिष्प्र- वाहशीलं चित्तं सर्वथा निरोधयामीत्येवंविध उत्साह आवर्त्यमानोऽभ्यास इत्युच्यते। अयमभ्यास इदानीं प्रवृत्तः स्वयमदृढः सन्ननादिप्रवृत्ता व्युत्था- नवासनाः कथमभिभवेदित्याशङ्कामपवदितुं सूत्रयति—" स तु दीर्घकालनै- रन्तर्यसत्कारासेवितो दृढभूमिः" इति। लोका हि मूढस्य वचनमुदाहरन्ति विद्य- मानाश्चत्वार एव वेदास्तानध्येतुं गतस्य माणवकस्य पञ्च दिवसा अतीता अद्याप्यसौ नाऽऽगत इति। तादृश एवायं योगी तदा स्याद्यदा[11] दिवसैर्वा मासैर्वा योगसिद्धिं वाञ्छेत्तस्मात्संवत्सरैर्जन्मभिर्वा दीर्घकालं योग आसेवि- तव्यः। तथा च स्मर्यते—

" अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ " इति ॥

चिरमासेव्यमानोऽपि यदि विच्छिद्य विच्छिद्य सेव्येत तर्ह्युत्पद्यमानानां योगसंस्काराणां समनन्तरभाविभिर्व्युच्छेदकालीनैर्व्युत्थानसंस्कारैरभिभवे सति

१ ङ. °ष्टानामप्यन्त° । २ घ. °ष्टानामन्त° । ३ ग. घ. वृत्तीर्विश° । ४ घ. °यः । तत्र प्र° । ५ घ. च. °ति न स्वभावः । ६ ग. °ते तस्मिंस्तस्यातिरेके सति । ७ ङ. °साधनसूत्रं पठति । ८ ग. तीव्रयोगोपेतं । ९ घ. कुल्यानयनेन । १० घ. समाधेः साधकः को ना° । ११ घ. योगाभ्यासः सेवितव्यः ।

खण्डनकारोक्तन्याय आपतेत्—अग्रे धावन्पश्चाल्लुप्यमानो विस्मरणशीलश्रुतवत्किमालम्बेतेति । तस्मान्निरन्तरमासेवितव्यः । सत्कार आदरः । अनादरेण सेव्यमाने वसिष्ठोक्तन्याय आपतेत्—

" अकर्तृ कुर्वदप्येतच्चेतश्चेत्क्षीणवासनम् ।
दूरं गतमना जन्तुः कथासंश्रवणे यथा ॥ " इति ॥

अनादरो लयविक्षेपकषायसुखास्वादनानामपरिहारः । तस्मादादरेण सेवितव्यः । दीर्घकालादित्रैविध्येन सेवितस्य समाधेर्दृढभूमित्वं नाम विषयसुखवासनया दुःखवासनया वा चालयितुमशक्यत्वम् ।

तच्च भगवता दर्शितम्—

" यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ " इति ॥

अपरलाभस्यानाधिक्यं कचवृत्तान्तेन वसिष्ठ उदाजहार—

" कचः कदाचिदुत्थाय समाधेः प्रीतमानसः ।
एकान्ते समुवाचेदमेवं गद्गदया गिरा ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ॥
सबाह्याभ्यन्तरे देहे ह्यध ऊर्ध्वं च दिक्षु च ।
इत आत्मा तथेहाऽऽत्मा नास्त्यनात्ममयं जगत् ॥
न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।
किमन्यदभिवाञ्छामि सर्वं संविन्मयं ततम् ॥
स्फारब्रह्मामलाम्भोधिफेनाः सर्वे कुलाचलाः ।
चिदादित्यमहातेजोमृगतृष्णा जगच्छ्रियः ॥ [इति ।]

गुरुदुःखेनाप्यविचाल्यत्वं शिखिध्वजस्य वत्सरत्रयसमाधिवृत्तान्तेनोदाजहार—

" निर्विकल्पसमाधिस्थं तत्रापश्यन्महीपतिम् ।
राजानं तावदेतस्माद्बोधयामि परात्पदात् ॥
इति संचिन्त्य चूडाला सिंहनादं चकार सा ।
भूयो भूयः प्रभोरग्रे वनेचरभयप्रदम् ॥

१ घ. °न्पश्चाल्लीयमानो । २ ग. घ. °स्वादानामपरिहरः । ३ ग. घ. वा पारथि° । ४ घ. शान्तमानसः । ५ ग. घ. °दमेको ग° । ६ ग. घ. सर्वं । ७ क. ख. ततो ह्यात्मा । ८ घ. ततः । ९ ङ. °मू । स्वात्मब्रह्मा° । १० क. ख. च. °जगत्स्थितिः । गु° ।

न चचाल तदा राम यदा नादेन तेन सः ।
भूयो भूयः कृतेनापि तदा सा तं व्यचालयत् ॥
चालितः पातितोऽप्येष तदा नो बुबुधे बुधः ॥" इति ॥

प्रह्लादवृत्तान्तेनाप्येतदेवोदाजहार—

"इति संचिन्तयन्नेव प्रह्लादः परवीरहा ।
निर्विकल्पपरानन्दसमाधिं समुपाययौ ॥
निर्विकल्पसमाधिस्थश्चित्रार्पित इवाऽऽबभौ ॥
पञ्च वर्षसहस्राणि पीनाङ्गोऽतिष्ठदेकदृक् ॥
महात्मन्संप्रबुध्यस्वेत्येवं विष्णुरुदाहरत् ।
पाञ्चजन्यं प्रदध्मौ च ध्वनयन्ककुभां गणम् ॥
महता तेन शब्देन वैष्णवप्राणजन्मना ।
बभूव संप्रबुद्धात्मा दानवेशः शनैः शनैः ॥" इति ॥

एवं वीतहव्यादीनामपि समाधिरुदाहरणीयः । वैराग्यं द्विविधम् । अपरं परं चेति । यतमानव्यतिरेकैकेन्द्रियवशीकारभेदैरपरं चतुर्विधम् । तत्राऽऽद्यं त्रयमर्थात्सूत्रयन्साक्षाच्चतुर्थं सूत्रयति—"दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम्" इति । स्रक्चन्दनवनितापुत्रमित्रक्षेत्रधनादयो दृष्टाः । वेदोक्ताः स्वर्गादय आनुश्रविकाः । तत्रोभयत्र सत्यामपि तृष्णायां विवेकतारतम्येन यतमानादिवैराग्यत्रयं भवति । अस्मिञ्जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानत्वम् ( १ ), स्वचित्ते पूर्वं विद्यमानानां दोषाणां मध्येऽभ्यस्यमानेन विवेकेनैतावन्तः पक्वा एतावन्तोऽवशिष्टा इति विवेचनं व्यतिरेकः ( २ ), दृष्टानुश्रविकविषयप्रवृत्तेर्दुःखात्मत्वबोधेन तां प्रवृत्तिं परित्यज्य मनसश्चौत्सुक्यमात्रेण तृष्णावस्थानमेकेन्द्रियत्वम् ( ३ ), वितृष्णत्वं वशीकारः ( ४ ), तदिदमपरं वैराग्यमष्टाङ्गयोगप्रवर्तकत्वेन संप्रज्ञातस्यान्तरङ्गम् । असंप्रज्ञातस्य तु बहिरङ्गम् । तस्यान्तरङ्गं परं वैराग्यं सूत्रयति—"तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति । संप्रज्ञातसमाधिपाटवेन गुणत्रयात्मकात्प्रधानाद्विविक्तस्य पुरुषस्य ख्यातिः साक्षात्कार उत्पद्यते । तस्माच्च साक्षात्कारादशेषगुणत्रयव्यवहारे यद्वैतृष्ण्यं तत्परं वैराग्यम् । तस्य तारतम्येन समाधेः शीघ्रत्वतारतम्यं सूत्रयति—"तीव्रसंवेगानामासन्नः समाधिलाभः" इति । संवेगो वैराग्यम् । तद्भेदाद्योगिनस्त्रि-

१ घ. पीनांसोऽतिष्ठ॰ । २ घ. ॰भ्यां जानामी॰ । ३ क. ख. ङ. ॰स्थापन॰ । ४ ग. घ. ॰धिपरिपा॰ । ५ ङ. ॰रे वैतृष्ण्यं यत्तत्परं वै॰ ।

विधाः—मृदुसंवेगा मध्यसंवेगास्तीव्रसंवेगाश्चेति । आसन्नोऽल्पेनैव कालेन समाधिर्लभ्यत इत्यर्थः। तीव्रसंवेगेष्वेव समाधितारतम्यं सूत्रयति—"मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः" इति । मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । तेष्वप्युत्तरोत्तरस्य त्वरया सिद्धिर्द्रष्टव्या । उत्तमोत्तमा जनकप्रह्लादादयोऽधिमात्रतीव्राः । मुहूर्तमात्रविचारेण दृढसमाधिलाभात् । अधमाधमा उद्दालकादयो मृदुसंवेगाः । चिरप्रयासेन तल्लाभात् । एवमन्येऽपि यथायोगमुन्नेयाः । तदेवमधिमात्रतीव्रस्य दृढभूमावसंप्रज्ञातसमाधौ लब्धे सति पुनर्व्युत्थातुमशक्यं सन्मनो नश्यति । मनोनाशेन वासनाक्षये रक्षिते सति जीवन्मुक्तिः सुप्रतिष्ठिता भवति । न च मनोनाशेन विदेहमुक्तिरेव न तु जीवन्मुक्तिरिति शङ्कनीयम् । प्रश्नोत्तराभ्यां तन्निर्णयात् ॥

श्रीरामः—

"विवेकाभ्युदयाच्चित्तस्वरूपेऽन्तर्हिते मुने ।
मैत्र्यादयो गुणाः कुत्र जायन्ते योगिनां वद ॥"

वसिष्ठः—

"द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तौ सरूपः स्यादरूपो देहमुक्तिगः ॥
प्राकृतं गुणसंभारं ममेति बहु मन्यते ।
सुखदुःखाद्यवष्टब्धं विद्यमानं मनो विदुः ॥
चेतसः कथिता सत्ता मया रघुकुलोद्वह ।
अस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर ॥
[१]सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ।
निःश्वासा इव शैलेन्द्रं तस्य चित्तं मृतं विदुः ॥
आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः ॥
चित्तमाशाभिधानं हि यदा नश्यति राघव ।
मैत्र्यादिभिर्गुणैर्युक्तं तदा सत्त्वमुदेत्यलम् ॥
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ।
सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥
अरूपस्तु मनोनाशो यो मयोक्तो रघूद्वह ।
विदेहमुक्तावेवासौ विद्यते निष्कलात्मकः ॥

१ घ. च. 'ष्टभ्य वि' । २ घ. च. सुखदुःखादयो धीरं ।

समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ।
विदेहमुक्तावमले पदे परमपावने ॥

[1]संशान्तदुःखमजडात्मकमेकरूपमानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्तस्तस्मिन्पदे गलितचित्तलवा वसन्ति॥" इति॥

*" जीवन्मुक्ता न मुह्यन्ति सुखदुःखरसस्थितौ ।
प्राकृतेनार्थकारेण किंचित्कुर्वन्ति वा न वा ॥ "

तस्मात्सरूपो मनोनाशो जीवन्मुक्तिसाधनमिति स्थितम् ॥

इति श्रीमद्विद्यारण्यप्रणीतजीवन्मुक्तिविवेके मनोनाशनिरूपणं नाम तृतीयं प्रकरणम् ॥ ३ ॥

---

## अथ चतुर्थं स्वरूपसिद्धिप्रयोजनप्रकरणम् ॥

केयं जीवन्मुक्तिः, किं वा तत्र प्रमाणं, कथं वा तत्सिद्धिः, इत्येतस्य प्रश्नत्रयस्योत्तरं निरूपितम् । सिद्ध्यां[2] वा किं प्रयोजनमित्यस्य चतुर्थप्रश्नस्योत्तरमिदानीमभिधीयते—ज्ञानरक्षातपोविसंवादाभावदुःखनाशसुखाविर्भावाः[3] पञ्च प्रयोजनानि । ननु प्रमाणोत्पन्नस्य तत्त्वज्ञानस्य को नाम बाधप्रसङ्गो येन रक्षाऽपेक्ष्यत इति चेदुच्यते । चित्तविश्रान्त्यभावे संशयविपर्ययौ प्रसज्येयाताम् । तथाहि—तत्त्वविदो राघवस्य विश्रान्तेः पूर्वं संशयं विश्वामित्र उदाजहार—

" न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।
स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ॥
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ।
विश्रान्तिमात्रमेवात्र ज्ञातज्ञेयाऽप्यपेक्षते ॥ " इति ॥

शुकस्तु स्वयमेवाऽऽदौ तत्त्वं विदित्वा तत्र संशयानः पितरं पृष्ट्वा[4] पित्रा

---

* अयं श्लोकः क. ख. ग. घ. च. पुस्तकेषु नास्ति, अधिकश्च ।

---

१ ङ. संशान्तरूपमज° । २ घ. च. सिद्धौ । ४ ग. दृष्ट्वा ।

तथैवानुशिष्टस्तथाऽपि संशयानो जनकमु[1]पासाद्य तेनापि तथैवानुशिष्टस्तं प्रत्येवमुवाच,

श्रीशुकः—

“ स्वयमेव मया पूर्[2]वमेतज्ज्ञातं विवेकतः।
एतदेव च पृष्टेन पित्रा मे समुदाहृतम् ॥
भवताऽप्येष एवार्थः कथितो वाग्विदां वर।
एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ॥
यथाऽयं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात्।
क्षीयते दग्धसं[3]सारो निःसार इति निश्चयः॥
तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम्।
त्वत्तो विश्राममाप्नोति चेतसा [4]भ्रमता जगत् ॥ ”

जनकः—

“ नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने।
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम्[6] ॥
[5]अव्युच्छिन्नश्चिदात्मैकः पुमानस्तीह नेतरत्।
स्वसंकल्पवशाद्बद्धो निःसंकल्पस्तु मुच्यते ॥
तेन त्वया स्फुटं ज्ञातं ज्ञेयं स्वस्य महात्मनः।
[7]भोगेभ्यो विरतिर्जाता दृश्याद्वा सकलादिह ॥
प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा।
[8]न दृश्ये यतसि(से) ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज ॥
अनुशिष्टः स इत्येवं जनकेन महात्मना।
विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥
वीतशोकभयायासो निरीहश्छिन्नसंशयः।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना।
[9]देश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ” इति ॥

तस्माद्विदितेऽपि तत्त्वे विश्रान्ति[10]रहितस्य शुकराघवयोरिव संशय उत्पद्यते। स चाज्ञानमिव मोक्षस्य प्रतिबन्धकः। अत एव भगवतोक्तम्—

---

१ ङ. °मुपससाद तें°। २ क. ख. ग. घ. °तः। ऐतदेव हि पृ°। ३ ङ. °संसार असार°। ४ ग.
घ. च. भ्रामितं। ५ च. अविच्छिन्नचिदात्मैकः। ६ ख. ग. घ. नेतरः। ७ ग. घ. भोगेऽप्यरति° च.
भोगेभ्योऽपरति°। ८ च. न दृश्यं तपासि ब्र°। ९ ग. देशे। घ. दृढं। १० ङ. °रहितशुकराघव°।

" अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ " इति ॥

अश्रद्धा विपर्ययः । स चोत्तरत्रोदाहरिष्यते । अज्ञानविपर्ययौ मोक्षमात्रविरोधिनौ । संशयस्तु भोगमोक्षयोरुभयोरपि विरोधी । तस्य परस्परविरुद्धकोटिद्वयावलम्बित्वात् । यदा संसारसुखाय प्रवृत्तिस्तदा मोक्ष[1]मार्गे बुद्धिस्तां निरुणद्धि । यदा च [2]मोक्षमार्गे प्रवृत्तिस्तदा संसारबुद्धिस्तां प्रतिबध्नाति । तस्मात्संशयात्मनो न किंचित्सुखमस्तीति [3]मुमुक्षुणा सर्वथा संशयाश्छेत्तव्याः । अत एव श्रूयते—" छिद्यन्ते सर्वसंशयाः " इति । विपर्ययस्यापि निदाघ उदाहरणम् । ऋभुः परमकरुणया निदाघस्य गृहमेत्य बहुधा तं बोधयित्वा निर्जगाम । बुद्धेऽपि तदुपदिष्टवस्तुन्यश्रद्दधानो निदाघः [4]कर्माणि परमपुरुषार्थहेतुरिति विपर्ययं प्राप्य कर्मानुष्ठाने यथापूर्वं प्रवृत्तः । सोऽपि शिष्यस्य परमपुरुषार्थभ्रंशो मा भूदिति कृपया गुरुः पुनरागत्य बोधयामास । तदाऽपि विपर्ययं न जहौ । तृतीयेन तु बोधनेन विपर्ययं परित्यज्य विश्रान्तिमलभत् ( त ) । संशयविपर्ययाभ्यामसंभावनाविपरीतभावनारूपाभ्यां तत्त्वज्ञानस्य फलं प्रतिबध्यते । तदुक्तं पराशरेण—

" मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम् ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तथैव च ॥
ज्ञानाग्निरपि संजातः प्रदीप्तः सुदृढोऽपि च ।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु [5]कल्मषम् ॥
भावना विपरीता या या चासंभावना शुक ।
कुरुते प्रतिबन्धं सा तत्त्वज्ञानस्य नापरम् ॥ " इति ॥

तस्मादविश्रान्तचित्तस्य संशयविपर्ययप्रसङ्गेन तत्त्वज्ञानस्य फलप्रतिबन्धलक्षणाद्बाधाद्रक्षाऽपेक्ष्यते । विश्रान्तचित्तस्य तु मनोनाशेन यदा जगदेव प्रविलीयते तदा संशयविपर्यययोः कः प्रसङ्गः । [6]जगत्प्रतिभासरहितस्य ब्रह्मविदो देहव्यवहारोऽपि विनैव प्रयत्नं परमेश्वरप्रेरितेन प्राणवायुना निष्पद्यते । अत एव च्छन्दोगा आमनन्ति—"नोपजनं स्मरन्निदं शरीरं स यथा [7]प्रयोग्य आचरणे [8]युक्त एवमेवायमस्मिञ्शरीरे प्राणो युक्तः " इति । उपजनं जनानां समीपे वर्तमानमिदं शरीरं न स्मरन्ब्रह्मविद्वर्तते । पार्श्वस्थजना एव तत्त्वविदः

---

१ ङ. °मार्गबु° । २ ङ. मोक्षाय प्र° । ३ च. मुमुक्षुणा संशयः सर्वथा छेत्तव्यः । अ° । ४ क. ख. घ. कर्माण्येव । कर्मण्येव । च. कर्मैव । ५ ग. कल्मषैः । ६ ख. जगत्प्रतिबोधरहितस्य । ७ ग. प्रयोग आ° । ८ ङ. °युक्तपूर्वमेवायम° ।

शरीरं पश्यन्ति । स्वयं तु निर्मनस्कत्वान्मदीयं शरीरमिति न स्मरति । प्रयोग्यो रथशकटादिवहने प्रयोक्तुमर्हः शिक्षितोऽश्वबलीवर्दादिः स यथा सारथिना मार्गस्याऽऽचरणे प्रेरितः पुनः पुनः सारथिप्रयत्नमनपेक्ष्य स्वयमेव रथशकटादिकं पुरोवर्तिग्रामं नयति एवमेवायं प्राणवायुः परमेश्वरेणास्मिञ्शरीरे नियुक्तः सत्यसति वा जीवप्रयत्ने व्यवहारं निर्वहति[1] ।

भागवतेऽपि स्मर्यते—

"देहं[2] विनश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।
दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥" इति ॥

वसिष्ठोऽप्याह—

"पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः ॥" इति ॥

सिद्धो न पश्यत्याचारमाचरतीत्युभयोः परस्परविरोध इति चेन्न । विश्रान्तितारतम्येन व्यवस्थोपपत्तेः । तदेव तारतम्यमभिप्रेत्य श्रूयते—"आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः" इति । अत्र चत्वारः प्रतीयन्ते । ब्रह्मवित्प्रथमः, ब्रह्मविद्वरो द्वितीयः, वरीयांस्तृतीयः, वरिष्ठश्चतुर्थः । त एते सप्तसु योगभूमिषु चतुर्थीं योगभूमिमारभ्य क्रमेण भूमिचतुष्टयं प्राप्ता इत्यवगन्तव्यम् । भूमयश्च वसिष्ठेन दर्शिताः—

"ज्ञानभूमिः शुभेच्छा[3] स्यात्प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥" इति ॥

"स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्य[4]पूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥
शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सद्विचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थे[5]ष्वसक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसा ॥

१ घ. निर्वाहयति । २ ख. ङ. देहं च नश्वरं° । ३ क. ख. शुभेच्छाख्या प्रथमा परिकीर्तिता । ४ घ. वैराग्यशुभयोरिच्छा प्रथमा प्रोच्यते बुधैः । ५ घ. °मिन्द्रियार्थेऽप्यशक्तिता । ख. च. °मिन्द्रियार्थेष्वरक्तता ।

भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥
दशाचतुष्टयाभ्यासादसंसर्गफला तु या ।
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम् ।
[1]आभ्यन्तराणां बाह्यानां पदार्थानाम[2]भासनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थाभाविनी नाम षष्ठी भवति भूमिका ॥
भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ " इति ॥

अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव न तु विद्याकोटावन्तर्भवति । भूमित्रये भेदसत्यत्व[3]बुद्धेरनिवारितत्वात् । अत एवैतज्जागरणमिति व्यपदिश्यते । तदुक्तम्—

" भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् ।
यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥ " इति ॥

* ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः । चतुर्थभूमौ सर्वजगदुपादानस्य ब्रह्मणो वास्तवमद्वितीयसत्तास्वभावं निश्चित्य ब्रह्मण्यारोपितयोर्जगच्छब्दाभिधेययोर्नामरूपयोर्मिथ्यात्वमवगच्छति । मुमुक्षोः [4]पूर्वोक्तजागरणापेक्षयेयं भूमिः स्वप्नः । तदाह—

" अद्वैते स्थैर्यमायाते द्वैते[5] चोपशमं गते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थी [6]भूमिकामिताः ॥
[7]विच्छिन्नशरद[8]भ्रांशविलयं प्रविलीयते ।
+ स्वस्वेतरं च सन्मात्रं यत्प्रबोधादुपासते ॥
योगिनः सर्वभूतेषु सद्रूपान्नौमि तं हरिम् ।
सत्तावशेष एवाऽऽस्ते चतुर्थी भूमिकामितः ॥ " इति ॥

---

*क. ख. ग. ङ. च. पुस्तकेषु तत इत्यारभ्य सत्त्वापत्तिरित्यन्तो विषयो नास्ति । + क. ख. ग. घ पुस्तकेष्वयं श्लोको नास्ति । अयं चाधिकोऽयुक्तश्च ।

---

१ ख. च. अभ्यन्तराणां । २ क. ख. च. °मभावनात् । ३ ख. ग. घ. °त्वबुद्धेर्निवर्तितत्वात् । च. °त्वबुद्धेर्नियतत्वात् । ४ ख. ग. घ. च. पूर्वोक्तं जागरणमपेक्ष्य सेयं । ५ घ. °ते च प्रशमं ग° । ङ. °ते च प्रथमं ग° । च. °ते प्रशममाग° । ६ च. भूमिकां गताः । ७ घ विच्छिन्नं शरदभ्राक्षं विलाप्यं प्रवि° । ८ च. °शरदभ्रांशवल्लोकः प्रवि° ।

सोऽयं [१]चतुर्थीं भूमिकां प्राप्तो योगी ब्रह्मविदित्युच्यते। पञ्चम्या(मा)दयस्तिस्रो भूमयो जीवन्मुक्तेरवान्तरभेदाः । ते च [२]निर्विकल्प[३]समाध्यभ्यासबलेन विश्रान्तितारम्येन संपद्यन्ते । पञ्चमभूमौ निर्विकल्प[४]कात्तदा स्वयमेव व्युत्तिष्ठति । सोऽयं योगी ब्रह्मविद्वरः । षष्ठभूमौ पार्श्वस्थैर्बोधितो व्युत्तिष्ठति । सोऽयं ब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयं सुषुप्तिर्गाढसुषुप्तिरिति चाभिधीयते । तदाह—

" पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ।
[५]शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥
अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन् ।
[६]परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥
कुर्वन्नभ्यास[७]मेतस्यां भूमिकायां विवासनः ।
षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ॥
यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्ते द्वैतैक्यनिर्गतः ॥
अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति केचन ।
समं ब्रह्म न जानन्ति द्वैताद्वैतविवर्जितम् ॥
अन्तः शून्यो बहिः शून्यः शून्यः कुम्भ इवाम्बरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥ " इति ॥

गाढं निर्विकल्पसमाधिं प्राप्तस्य संस्कारमात्रशेषस्य चित्तस्य मनोराज्यं कर्तुं बाह्यपदार्थान्ग्रहीतुं वा सामर्थ्याभावादाकाशावस्थितकुम्भवदन्तर्बहिःशून्यत्वम् । [८]स्वयंप्रकाशसच्चिदानन्दैकरसे ब्रह्मणि निमग्नत्वेन बहिश्च सर्वत्र ब्रह्मदृष्ट्या समुद्रमध्यस्थापितजलपूर्णकुम्भवदन्तर्बहिःपूर्णत्वम् । तुरीयाभिधां सप्तमीं भूमिं प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानमेव [१०]नास्ति । ईदृशमेवोद्दिश्य " देहं विनश्वरमवस्थित[९]मुत्थितं च " इत्यादिभागवतवाक्यं प्रवृत्तम् । असंप्रज्ञातसमाधिप्रतिपादकानि योगशास्त्राण्यत्रैव [११]पर्यवसितानि । सोऽयमीदृशो [१२]योगी पूर्वोदाहृतश्रुतौ ब्रह्मविद्वरिष्ठ इत्युच्यते । तदेवं पार्श्वस्थबोधितः

---

१ ग. घ. च. चतुर्थभूमिं प्राप्तो । २ ख. ग. घ. निर्विकल्पकसमाध्यभ्यासकृतेन विश्रा° । ३ च. °समाध्यभ्यासेन कृतचित्तविश्रा° । ४ ङ. °कात्समाधेस्तदा । ५ ङ. शान्ताशेषांशगन्धी-मांस्तिष्ठ° । ६ च. उपशान्ततया । ७ क. ख. °मेतस्या भूमिकाया निवासनः । ८ च. स्वप्रका° । ९ ग. घ. ङ. °न समु° । १० ग. नास्तीति । ई° । घ. °नास्तीति तादृ° । ११ च. पर्यवस्यन्ति । १२ च. योगी आत्मक्रीडेति पूर्वो° ।

सिद्धो न पश्यतीत्यनयोर्भूमिद्वयेन[1] व्यवस्थितत्वान्न कोऽपि विरोधः । *तत्रायं संग्रहः । पञ्चम्या(मा)दिभूमित्रयरूपायां जीवन्मुक्तौ संपाद्यमानायां द्वैतप्रतिभासाभावेन संशयविपर्ययप्रसङ्गाभावादुत्पन्नं तत्त्वज्ञानमबाधेन रक्षितं भवति । सेयं ज्ञानरक्षा जीवन्मुक्तेः प्रथमं प्रयोजनम् । तपो द्वितीयं प्रयोजनम् । योगभूमीनां देवत्वादिप्राप्तिहेतुतया[2] तपस्त्वं द्रष्टव्यम् । तद्धेतुत्वं चार्जुनभगवतोः श्रीरामवसिष्ठयोश्च प्रश्नोत्तराभ्यामवगम्यते ।

अर्जुन उवाच—

" अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥
+एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥

भगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ " इति ॥

श्रीराम उवाच—

" एकामथ द्वितीयां वा तृतीयां भूमिकामुत ।
आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥ "

---

* तत्रायं संग्रह इति घ. पुस्तक एव । +क. ख. ग. घ. पस्तकेषु एतदादिश्लोकद्वयं नास्ति । च.पुस्तके त्वयमेक एव श्लोको नास्ति । ङ. पुस्तके चैतदादिश्लोकद्वयं व्यत्यासेन वर्तते, किं चैतन्म इत्यस्मात्पूर्वमर्जुन उवाचेति, पार्थ नैवेहेत्यस्मात्प्राणेत्यस्माच्च पूर्वं भगवानुवाचेति च वर्तते ।

---

१ ग. ङ. 'द्वये व्यव' । २ क. ख. देवत्वप्राप्ति' । ङ. देवत्वादिपदप्राप्तिहेतुतया । च. देवत्वहेतुतया ।

वसिष्ठ उवाच—

" योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः।
भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥
ततः सुरविमानेषु लोकपालपुरेषु च।
मेरूपवनकुञ्जेषु रमते रमणीसखः ॥
ततः सुकृतसंभारे दुष्कृते च पुरा कृते।
भोगक्षयपरिक्षीणे जायन्ते योगिनो भुवि ॥
शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम्।
तत्र प्राग्भावनाभ्यस्तं योगभूमित्रयं बुधः।
स्पृष्ट्वोपरि पतत्युच्चैरुत्तरं भूमिकाक्रमम् ॥" इति ॥

अस्त्वेवं योगभूमीनां देवलोकप्राप्तिहेतुत्वम्। तावता तपस्त्वं कुत इति चेच्छ्रुतेरिति ब्रूमः। तथा च तैत्तिरीया आमनन्ति—" तपसा देवा देवतामग्र आयन्, तपसर्षयः सुवरन्वविन्दन्" इति। तत्त्वज्ञानात्प्राचीनस्य भूमिकात्रयस्य तपस्त्वे सति तत्त्वज्ञानस्योत्तरकालीनस्य निर्विकल्पसमाधिरूपस्य पञ्चम्यादिभूमिकात्रयस्य तपस्त्वं कैमुतिकन्यायसिद्धम्। अत एव स्मर्यते—

" मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥" इति ॥

यद्यप्यनेन न्यायेन तपसा प्राप्यं जन्मान्तरं नास्ति तथाऽपि लोकसंग्रहायेदं तप उच्यते। अत एव भगवानाह—

" लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥" इति ॥

संग्राह्यश्च लोकस्त्रिविधः। शिष्यो भक्तस्तटस्थश्चेति। तत्र शिष्यस्यान्तर्मुखे योगिनि गुरौ प्रामाणिकत्वबुद्ध्यतिशयेन तदुपदिष्टे तत्त्वे परमं विश्वासं प्राप्य चित्तं सहसा विश्राम्यति। अत एव श्रूयते—

" यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति ॥

स्मर्यते च—

" श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥" इति ॥

---

१ घ. °खः। भुक्ते सु°। २ ङ. च. °भूमिक्रमं बुधः। ३ घ. °धः। युक्तः परिपतत्युच्चै°। ४ ग. °रुत्तमं भू°। ५ घ. आसन्, त°। ६ ग. घ. °यः स्वर°। ७ ख. ग. घ. °पस्त्वेन तत्त्व°। ८ च. स्मर्यते-। ९ ग. °ष्यश्चान्तर्मखे।

